# काव्यचमत्कारः

मूलसंस्कृतकारिकाहिन्दीभाषानुवादटिप्पणीसहितः


## आचार्यो रामप्रतापः

*प्रमुखोऽनुसन्धातृचरो वि. वि. अनुदान-आयोगः नवदिल्ली*
*संस्कृतविभागस्याचार्यचरोऽध्यक्षचरः कलासङ्कायाध्यक्षचरश्च*
*जम्मूविश्वविद्यालयः, जम्मू तवी*






## हाइब्रो पब्लिकेशन्ज़

बाड़ी ब्राह्मणां, जम्मू

मो० : 094191-07330

आई एस बी एन : *978-81-922447-7-8*



**प्रथम संस्करण : 2012**

**मूल्य : ₹ 400**

*मुद्रक*

क्लासिक प्रिंटर्ज

बाड़ी ब्राह्मणां, जम्मू

मो. 094191-07330

*वितरक*

1. रवि मल्होत्रा
   ईस्टर्न बुक लिंकर्स
   9825 न्यूचन्द्रावल जवाहर नगर, दिल्ली–110007

2. व्यवस्थापक
   वी वी .आर आई बुक एजेन्सी
   साधु आश्रम होशियारपुर–146021

# KAVYACHAMATKARA

*Text with Hindi Commentary*

**Dr. Ram Pratap**

*Ex Principal Investigator (U.G.C. New Delhi)*
*Ex Professor & H.O.D. Deptt. of Sanskrit*
*Ex Dean Faculty of Arts, Jammu University, Jammu Tawi*




HIGHBROW PUBLICATIONS

**Bari Brahmana, Jammu**
**Mob. 094191-07330**

# शुभाशंसा

विदन्त्येव विज्ञा यद् विश्वस्य ज्ञान-विज्ञान-विमर्शपरम्परासु अतिमहदवदानं वरीवर्ति भारतीयप्रज्ञायाः। अस्याः प्रज्ञायाः परमप्रकर्षं विभावयामः शास्त्राणां काव्यानां च परम्परासु। एताश्च शास्त्रकाव्यपरम्परा आवेदेभ्यः प्रसृता अद्यावधि विकसन्तीति न संशीतिः। एतासां परम्पराणाम् ऐतिह्यम् आविर्भावकालः, विस्तारकालः समृद्धिकालश्चेति त्रिषु चरणेषु प्रसृतम्। विक्रमपूर्ववर्तिन्यः प्रथमाः द्वित्राः पञ्च वा सहस्राब्द्यः आविर्भावकालस्य सन्ति। अनन्तरं विक्रमात् परवर्तिनी प्रथमा सहस्राब्दी वर्तते विस्तारकालः। तदनु परापतति समृद्धिकालः। अयं च कालोऽद्यावधि संस्कृतपरम्परायामनुवर्तते। अस्मिन् काले विक्रमात् परं द्वितीयायां सहस्राब्द्यां (आ-1100-ख्रिस्ताब्देभ्योऽद्यावधि) किमपि मौलिकं चिन्तनं रचनाकर्म संस्कृते न सञ्जातमिति जल्पन्ति केचन तथाकथिता आधुनिकाः। अयं केवलं टीकानां काल इत्यपि ते आमनन्ति। वस्तुस्थितिस्तु अन्यैव। सत्यं नाना टीकाग्रन्था अस्मिन् सहस्राब्दे पण्डितैश्चिन्तकैर्विरचिता अद्यापि विरच्यन्ते च। एतादृशेषु टीकाकारेषु सन्ति अभिनवगुप्त-रामानुज-वल्लभाचार्यसदृक्षा महनीया महान्तो दार्शनिका विचारका येषां टीकाः प्रकटीकुर्वन्ति सर्वथा नवोल्लासं सरस्वत्याः। अस्मिन् सहस्राब्दे नैके अभूवन् विपश्चिदपश्चिमा ये साहित्यशास्त्रे परिकल्पयन्ति स्म नवाः कोटीर्नूत्नानि वा लक्षणानि, लक्षयन्ति स्म नवविधाः, आविष्कुर्वन्ति स्म नवीनांश्च सिद्धान्तान्। संस्कृतसाहित्यशास्त्रपरम्परायां नवीनाः सङ्ग्रहग्रन्थाः प्रकरणग्रन्था वा बाहुल्येन विंशशतके प्रकाशिता अभूवन्, प्रकाशमायान्ति चैकविंशे शतकेऽपि। यद्यपि काव्यप्रकाशादिप्रत्नैः ग्रन्थरत्नैरेव आकलनीया सर्वापि उपलब्धिः काव्यसमृद्धिर्वा सकलस्य पुरातनस्य साम्प्रतिकस्य च संस्कृतवाङ्मयस्यापीति धिया विनिबद्धाः केचन सुधियो नानुभवन्ति नवलक्षणानुसन्धानस्यावश्यकताम्। परन्तु सन्ति नैके विद्वत्तल्लजा ये साहित्यशास्त्रे नवाचारमपेक्षन्ते तदनुसारेण च परिकल्पयन्ति नवीनाः कोटीः लक्षयन्ति नवीना विधाः आविष्कुर्वन्ति नवीनांश्च सिद्धान्तान्। छज्जूरामशास्त्रिणः काव्यबिन्दुः, रेवाप्रसादद्विवेदिनां काव्यालङ्कारकारिका ब्रह्मानन्दशर्मणां च काव्यसत्यालोको ग्रन्था इमे अनया सरण्या नूतनमुपोद्घातं विदधति। एतच्च नवव्याख्यानं नवलक्षणानां परिकल्पना वा परम्पराणां सातत्येन सम्भवति। क्वचित् पूर्वप्रसिद्धा राद्धान्ता नवीने युगे

नवसंस्कारं प्राप्नुवन्ति। प्रकृतोऽयं प्रकरणग्रन्थोऽत्र समीचीनं निदर्शनम्। अस्मिन् ग्रन्थे रामप्रतापवर्यैः चमत्कारसिद्धान्तस्य नवाविष्कारो विहितः। चमत्कारतत्त्वं तु परम्परायां बहुधा प्रपञ्चितम्। नाट्यशास्त्रपरम्परायां शिल्पकोपरूपकस्याङ्गेषु चमत्कारस्य अङ्गस्य लक्षणं लभ्यते। अमृतानन्दयोगिना संल्लापकाख्यस्योपरूपकस्याङ्गत्वेनापि चमत्कृतिर्नाम अङ्गं निरूपितम्। विश्वनाथेन साहित्यदर्पणे स्वप्रपितामहस्य नारायणस्य चमत्कारं विस्मयाभिन्नं मन्यमानस्य मतमुल्लिखितम्। तद्ग्रन्थानुपलब्धेर्धर्मदत्तस्य कारिकांशोऽयमुद्धृतस्तैनैव–

रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः।
तस्माददद्भुतमेवाह कृती नारायणो रसम्।।

कविकण्ठाभरणे क्षेमेन्द्रश्चमत्कारमाहात्म्यं प्रथयति, अविचारितरमणीय-विचारितरमणीय- समस्तसूक्तिव्यापि- सूक्तैकदेशदृश्य-शब्दगतार्थगतालङ्कारगत-रसगत-प्रख्यातवृत्तिगतत्वेन दशभेदांश्च निरूपयति चमत्कारस्य। रामचन्द्रगुणचन्द्रौ तु स्वीये नाट्यदर्पणे रसास्वादविरामे सति कवि-नट-कौशल-विमर्श एव चमत्कार इति मतं गृह्णीतः। अथ चतुर्दशशतकभवो विश्वेश्वरस्तु चमत्कारचन्द्रिकायां चमत्कारस्वरूपं विशदं विवृणोति। गुण-रीति-रस-वृत्ति-पाक-शय्यालङ्कारा इति सप्तकारणानि चमत्कारस्य स मनुते। चमत्कारि, चमत्कारितरं चमत्कारितमं चेति त्रिविधं काव्यमपि तेन निरूपितम्। हरिप्रसादस्तु 1726 तमे ख्रिस्ताब्दे विरचिते स्वीये काव्यालोके चमत्कारमेव काव्यात्मतया प्रतिपादयति। पण्डितराजजगन्नाथो रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता, लोकोत्तरत्वं च चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेष इति दिशा चमत्कारत्ववत्त्वमेव काव्यत्वमिति परिष्करोति स्वं काव्यलक्षणम्।

विद्वद्वरेण्येन रामप्रतापमहोदयेन सैषा सर्वापि चमत्कारनिरूपणपरम्परा साकल्येन समीक्षिता। अस्यां चमत्कारतत्त्वं क्वचिदुन्मीलितं क्वचित् तिरोहितं प्रतीयते। अस्फुटस्फुरितं चमत्कारतत्त्वं अस्मिन् एकविंशे शतके सर्वाङ्गीणतया व्याचष्ट आचार्यो रामप्रतापः प्रकृतेऽस्मिन् प्रबन्धे। पूर्वमनेन चमत्कारविचारचर्चा इति चमत्कारसम्प्रदायप्रतिपादिनी कारिकावली विरचिता, सा च विश्वेश्वरानन्दवैदिकशोधसंस्थानतः 2004 तमे ख्रिस्ताब्दे प्राकाश्यं गता। तस्यां चमत्कारतत्त्वस्य स्वारस्यं विदुषा श्रीमता रामप्रतापवर्येण उन्मीलितम्। प्रकृतेऽस्मिन् ग्रन्थे तत् पुनः परिष्कारपूर्वकं विशदीकृतम्। यद्यपि पूर्ववर्तिनामाचार्याणां दायं

सविनयं स्वीकरोति आचार्योऽयम्–

नवीनं न मया प्रोक्तं नापि मे नूतनं मतम्।
प्रस्तौम्यत्र विचारांस्तान् पूर्वाचार्यैः प्रवर्तितान्॥

इति स्वीकारोक्तौ, तथापि ग्रन्थेऽस्मिन् चमत्कारसिद्धान्तप्रतिपादनं यथा समग्रतां प्राप्तं तथा पूर्वं न विलोक्यते। प्रतिपादनेऽप्यत्र नवीनता मौलिकता च स्फुरतः।

ग्रन्थकार आचार्यो रामप्रतापः चमत्कारमेव काव्यहेतुं तमेव च कार्यमपि ब्रूते। रचनाप्रक्रियां च इत्थं विशदीकरोति–

प्रज्ञा गृह्णाति सामग्रीं रूपं यच्छति कल्पना।
आत्मभूतिं चमत्कारं सिञ्चति भावना कवेः।।

चमत्कारस्य सर्वव्यापितां काव्यजगति सम्यक् स्थापयित्वा काव्यगतपरमतत्त्वपरामर्शपुरस्सरं दार्शनिकीं मनोवैज्ञानिकीं च आधारभूमिं तत्र चमत्कारपरिणतीश्च सर्वथा प्रामाणिकतया प्रस्तौति ग्रन्थकारः। चितिरूपश्चमत्कारः स एवानन्दः, तस्यैव भेदाः सर्वाः काव्यकोटय इति विवेचनं सप्रमाणमिह विहितम्। तद्यथा–

यः संसरति संसारः पञ्चभूतविनिर्मितः।
चमत्कारिण ईशस्य चमत्कारादजायत।।

उन्मज्जन्ति निमज्जन्ति चमत्कारनदेऽखिलाः।
चमत्कारोद्भवं सर्वं चमत्कारे निलीयते।।

पुरुषोऽस्ति चमत्कारः प्रकृतिश्च चमत्कृतिः।
कुरुतस्तौ चमत्कारं कृत्वा सर्गमनेकधा।

अयं आचार्यः श्रीरामप्रतापः 'वेदजानिः' वेदालङ्कार इति न संशयः। सोऽयं चमत्कारप्रस्थानं स्वतन्त्रतया प्रकरणग्रन्थेऽस्मिन् स्थापितवान्। ग्रन्थोऽयं साहित्यशास्त्रविदां सुधियां समाजे समादरास्पदं भूयादिति कामये।

*राधावल्लभः त्रिपाठी*
**कुलपतिः, राष्ट्रियसंस्कृतसंस्थानम्**
**मानितविश्वविद्यालयः**
**जनकपुरी नवदिल्ली**

# FOREWORD

Modern thinkers and critics of Sanskrit Poetics have classified the views of different ancient Acharyas into following six schools as : (1) Rasa School (2) Alankara School, (3) Riti School (4) Dhvani School, (5) Vakrokti School and (6) Auchitya School. These Schools have been recognized and established on the basis of one element being considered as the soul of poetry, although other elements also are not totally ignored. For example, in the Riti School of Vamana, Riti is described as the soul of poetry while other elements are its subordinates. Bharata and many others regarded Rasa as the soul of poetry while Bhamaha considered Alankara, Anandavardhana Dhvani and Kuntaka Vakrokti respectively. Kshemendra by writing Auchityavicharăcharcha emphasised the importance of Auchitya (Propriety) but in his another work Kavikanthabharana he professed Chamatkara as the most important element of poetry without which the existence of poet and poetry is not possible. Vishveshvara Kavichandra in his Chamatkarachandrika pleaded emphatically the views propounded by Kshemendra. Many other later writers like Panditaraja Jagannatha followed their path.

Though modern scholars of Indian Poetics have put forth many conflicting opinions and many interesting discussions regarding the most important element of poetry, not much has

been written about Chamatkara element. Almost every ancient Indian poetician (Acharya) has mentioned this element directly or indirectly in his work. Even then modern scholars of Sanskrit Poetics have not given proper place to this seventh school of Sanskrit Poetics. Efforts of Prof. Ram Pratap must be appreciated in this respect as he has culled out the data about Chamatkara from works of various ancient as well as modern writers and brought to light this hitherto forgotten chapter of Indian Poetics. He summarized the tenets of this school in one hundred and sixty five Sanskrit verses in his earlier work Chamatkara vicharacharcha. In his present work Kavyachamatkara he gives detailed description of various aspects of poet, critic and poetry. He has discussed the definitions of poetry as given by former poeticians and has proposed some new comprehensive definitions also comprising other elements but establishing the prominent position of the chamatkara element. I hope his work will be favourably received by students and scholars of Sanskrit Poetics alike.

**VED KUMARI GHAI**
Recepient, Presidents Certificate of Honour
Ex-Professor, H.O.D. (Sanskrit) Dean (Arts)
Ex-National Fellow (U.G.C.)
Jammu University

# स्वस्तिवाक्

सहोदररसैः सार्धं कवितावनितायुतः।
चमत्कारसुतं प्राप्य हृष्टः काव्यपुमानसौ।। 1।।

जातं तु गौरवं तस्य चमत्कारप्रतिष्ठया।
पुत्रे प्रतिष्ठिते जाते प्रतिष्ठां लभते पिता।। 2।।

चमत्कारं विना काव्यं न कदाचन शोभते।
देहोऽप्येष विनात्मानं जुगुप्सां तनुते भृशम्।। 3।।

शब्देऽप्यसौ चमत्कारो ह्यर्थेऽप्यसौ चमत्कृतिः।
शब्दार्थयुगले काव्ये तस्यैव स्थितिरिष्यते।। 4।।

ब्रह्मजातं जगत् सर्वं ब्रह्मणि लीयते यथा।
रसादीनां स सङ्घातश्चमत्काराम्बुधौ तथा।। 5।।

काव्यस्यात्मा चमत्कारः काव्ये सारश्चमत्कृतिः।
लोकोत्तरमिदं तत्त्वं काव्ये कथमुपेक्ष्यते।। 6।।

सर्वेषां सम्प्रदायानां येनास्ति सम्प्रदायता।
चमत्कारः कथं सोऽयं सम्प्रदायो न कथ्यते।।7।।

योऽयं रामप्रतापोऽस्ति चमत्कारपरायणः।
चमत्कारप्रतिष्ठायै तेन यत्नः कृतो महान्।। 8।।

रविः[1] काव्यप्रकाशेऽसौ ध्वनावभिनवस्तथा।[2]
साहित्यस्य सुधासिन्धौ[3] मत्स्यो जातो नवोऽपरः[4] ।। 9 ।।

अस्य सूक्ष्मतरा बुद्धिर्दर्पणे प्रतिबिम्बिता।[5]
जाता सकौतुका सैषाऽलङ्काराणां च कौस्तुभे[6] ।। 10 ।।

चमत्कारमयी जाता कवीनां कण्ठभूषणे।[7]
गङ्गाधरे[8]प्रकाशे[9]सा प्रौढा तत्त्वार्थदर्शिनी।। 11 ।।

विचित्रा चित्रमीमांसा[10] तत्राप्यस्य विचित्रता।
नन्दः कुवलयानन्दस्तत्र[11] नन्दति तन्मनः।। 12 ।।

औपम्यं पदलालित्यमर्थस्यापि च गौरवम् ।
चमत्कारस्य चर्चायामेषां[12] दृष्टं निबन्धनम्।। 13 ।।

पदौचित्यं स्फुटार्थत्वं प्रस्तुतिश्चापि शोभना।
अस्मिन् काव्यचमत्कारे तिष्ठन्तीमे त्रयो गुणाः 14 ।।

श्रीमद्रामप्रतापानां कृतिरेषाऽतिनूतना।
सतां चेतस्सु कुर्वीत चमत्कारस्य संस्थितिम्।।15 ।।

**आचार्यः प्रियतमचन्द्रशास्त्री**
पूर्वप्राचार्यः राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)
श्रीरणवीरपरिसरः कोटभलवालः, जम्मू तवी

---

1. *काव्यप्रकाशीयमधुमतीटीकाकारो रविभट्टाचार्यः*
2. *ध्वन्यालोकस्य लोचनटीकाया रचयिता अभिनवगुप्तः*
3. *साहित्यसुधासिन्धुः विश्वनाथदेवविरचितः हिन्दीटीकाकारो रामप्रतापः*
4. *मत्स्यावतारः*
5. *साहित्यदर्पणः*
6. *कविकर्णपूरस्य अलङ्कारकौस्तुभः*
7. *क्षेमेन्द्रविरचितं कविकण्ठाभरणम्*
8. *रसगङ्गाधरः*
9. *काव्यप्रकाशः*
10. *अप्पयदीक्षितकृता चित्रमीमांसा*
11. *अप्पयदीक्षितकृतः कुवलयानन्दः*
12. *रामप्रतापविरचितचमत्कारविचारचर्चा*

# निवेदन

कुछ वर्ष पहले विश्वविद्यालय अनुदान आयोग नई दिल्ली के द्वारा स्वीकृत एक परियोजना के अन्तर्गत चमत्कारसम्प्रदाय सम्बन्धी अनुसन्धान करने के लिए मुझे विशेष अवसर मिला। प्रस्तुत काव्यचमत्कार भी उसी परियोजना का एक अङ्ग है। अतएव आर्थिक सहयोग प्रदानार्थ विश्वविद्यालय अनुदान आयोग को मैं अपना आभार प्रकट करता हूँ।

प्रो. राधावल्लभ त्रिपाठी, कुलपति राष्ट्रीय संस्कृत संस्थान, नई दिल्ली स्वयं महाकवि, काव्यशास्त्रविद्, ग्रन्थकार, नाटककार, समालोचक और विश्वविख्यात विद्वान् हैं। उन्होंने इस ग्रन्थ की प्रति को पढ़कर विद्वत्तापूर्ण शुभाशंसा लिखी है। अपनी गुणग्राहिता, सहृदयता और सदाशयता का परिचय देते हुए उन्होंने मेरी इस कृति में गुणाविष्करण कर दिया है। ऐसे ही गुणिजनों के विषय में महाराज भर्तृहरि ने ये पंक्तियाँ लिखी हैं–

परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्त :॥ नीतिशतक ॥78॥

परोत्कर्षे निजप्रकर्षः उनका जीवनदर्शन है, निरन्तर विद्यार्जन व्यसन है और कुशलप्रबन्धन धन है। ऐसे गुणनिधान आचार्यप्रवर त्रिपाठी के प्रति अपनी हार्दिक कृतज्ञता अभिव्यक्त करते हुए मैं उनके लिए दीर्घायुष्य और यशस्वी जीवन की कामना करता हूँ।

प्रो. वेदकुमारी घई भूतपूर्व अध्यक्षा संस्कृतविभाग, जम्मू विश्वविद्यालय संस्कृत, अंग्रेज़ी, हिन्दी और डोगरी भाषाओं की जानी मानी विदुषी हैं। सेवानिवृत्त होने पर भी उनकी सारस्वतसाधना सतत रूप से चल रही है। अपनी इस कृति के निर्माण में आरम्भ से अन्त तक उनके बौद्धिक सुझावों, सत्परामर्शों और दिशानिर्देशों के द्वारा मुझे यथेष्ट साहाय्य मिला है। यदि उनका यह सहयोग नहीं मिलता तो इस दुर्गम शास्त्रकान्तार में घुसने के बाद बाहर

निकलना मेरे लिए सम्भव न था। उन्होंने अपने द्वारा लिखे गये सारगर्भित प्राक्कथन में काव्यशास्त्र में काव्यचमत्कार के महत्त्व की ओर भी सङ्केत कर दिया है। इस कार्य को सम्पन्न करने के लिए भी उन्होंने बार बार मुझे प्रेरित किया है इसके लिए उनको मैं अपनी ओर से भाव भीना धन्यवाद देता हूँ।

प्रो. प्रियतमचन्द्र शास्त्री ने राष्ट्रीय संस्कृत संस्थान नई दिल्ली द्वारा संचालित श्री रणवीर केन्द्रिय संस्कृत विद्यापीठ (मानित विश्वविद्यालय) जम्मू के आचार्य और प्राचार्य पदों को अलङ्कृत किया है। वे संस्कृत काव्यशास्त्र के प्रकाण्ड पण्डित, संस्कृत और हिन्दी भाषा के प्रसिद्ध कवि एवं नाटककार हैं। सेवानिवृत्त होकर भी संस्कृत लेखन में संलग्न हैं। उन्होंने न केवल काव्यचमत्कार के लिए स्वस्तिवाक् लिखने का कष्ट किया है अपितु समय समय पर आने वाली भावाभिव्यक्ति सम्बन्धी कठिनाइयों को दूर करके इस रचना की गुणवत्ता में वृद्धि की है। एतदर्थ उनका मैं कृतज्ञ एवं आभारी हूँ।

प्राचार्य डॉ. ज्ञानचन्द्र त्यागी राजस्थान विश्वविद्यालय जयपुर से सम्बन्धित अनेक स्नातकोत्तर महाविद्यालयों में संस्कृत विभागाध्यक्ष एवं प्राचार्य पदों पर कार्य करते रहे हैं। वे संस्कृत साहित्य, संस्कृत काव्यशास्त्र, दर्शनव्याकरणादि शास्त्रों के ज्ञाता, सुवक्ता और उच्चकोटि के कवि, लेखक, पत्रकार एवं आलोचक हैं। उन्होंने इस कृति का परिष्कार किया है उनका यह अनुग्रह स्मरणीय रहेगा।

इस शुभवेला में अपने साहित्यगुरु सर्वश्री वागीश्वर विद्यालङ्कार, रामनाथ वेदालङ्कार, काकाराम शास्त्री, द्विजेन्द्रनाथ मिश्र निर्गुण एवं आध्यात्मिक गुरुदेव ओजस्वी शर्मा का मैं स्मरण कर रहा हूँ जिनकी कृपा और आशीर्वाद से मेरा यह कारिकालेखन कार्य सम्पन्न हुआ है। जिन प्राचीन, नवीन और अतिनवीन आचार्यों के ग्रन्थों को पढ़कर मैंने यत् किञ्चित् ज्ञान पाया है उनको भी नतमस्तक होकर प्रणाम करता हूँ। जम्मू विश्वविद्यालय, श्री रणवीर संस्कृत अनुसन्धान संस्थान जम्मू, विश्वेश्वरानन्द वैदिक शोध संस्थान होशियारपुर, गोयनका पुस्तकालय वाराणसी और दिल्ली विश्वविद्यालय के पुस्तकालयों के अधिकारियों का भी मैं ऋणी हूँ जिन्होंने मुझे पुस्तकें प्रदान की हैं। अन्त में इस पुस्तक को इतने सुन्दर रूप से मुद्रित करने वाले श्री कुलदीप शर्मा मैसर्स रोहिणी प्रिंटर्स, जालन्धर का धन्यवाद करता हूँ।

**रामप्रताप**

# विषयानुक्रमणिका

**प्रथमः खण्डः**

## प्रथमोल्लासः



## द्वितीयोल्लासः

## तृतीयोल्लासः



## चतुर्थोल्लासः

## प्रथमोल्लासः



## द्वितीयोल्लासः

## तृतीयोल्लासः



## चतुर्थोल्लासः

# विषयावतरणिका

अस्मिन् काव्यचमत्कारनामके ग्रन्थे काव्यं चमत्कारं चाधिकृत्य नैके विचारा मया सविस्तरं प्रस्तुता आलोचिताश्च। इदानीं चमत्कारविषये किञ्चित् परिचयात्मकं संक्षेपेण विलिख्यते।

## चमत्कारसम्प्रदायस्य पृथगस्तित्वम्

चमत्कारसम्प्रदायस्य स्थितिरनेकैः प्राचीनैर्नवीनैरतिनवीनैश्चाचार्यैः समानरूपेण स्वीकृता। अस्य चमत्कारसम्प्रदायस्य विषये प्रतिपक्षिभिरेतत् कथयितुं शक्यते यत् नास्त्येव काव्ये पृथक् चमत्कारतत्त्वम्। प्रसिद्धप्रस्थानव्यतिरेकिणः काव्यप्रकारविशेषस्य चमत्कारिकाव्यस्य तु स्थितिः काव्येषु काव्यशास्त्रीयवाङ्मये च नास्ति, यतो हि इदानीं यावत्तु रसालङ्कारध्वनिरीतिवक्रोक्त्यौचित्यानां षण्णां काव्यसम्प्रदायानामेव विदुषां मध्ये प्रसिद्धि र्जाता। एष्वेव काव्यसम्प्रदायेषु तदन्तर्भावो भवितुं शक्नोति। अत एव तस्य स्वतन्त्रा सत्ता नाङ्गीकर्तुं शक्यते। अस्मिन् विषये प्रत्युत्तररूपेण इदं वक्तुं पार्यते यद्–यतो हि चमत्कारपदस्य व्युत्पत्तिप्रवृत्तिनिमित्तका विविधा अर्था लक्ष्यलक्षणानि च दृश्यन्ते, अतोऽस्य सम्प्रदायस्य पृथग् अस्तित्वमवश्यमेव अभ्युपेतव्यम्। वस्तुतस्तु चमत्कारं विना शब्दार्थरूपं काव्यशरीरं निर्जीवं निष्पन्दं च सञ्जडीभूतमिव जायते। चमत्कारावच्छेदकावच्छिन्नमेव काव्यं काव्यसञ्ज्ञां लभते।

## चमत्कारस्य व्युत्पत्तिः प्रवृत्तिःस्थानं च

चमत्कारः पुंल्लिङ्गम्। चमत्करोतीति चमत्+कृ+अण् कर्तरि तथा चमत्+कृ+घञ् भावे।

चमत्कारपदस्य पञ्चविधेयं व्युत्पत्तिः–

1. चमत्करोतीति चमत्कारः कर्तरि प्रयोगः।
2. चमत्क्रियते (सामाजिकः) अनेनेति चमत्कारः कर्मणि करणे च प्रयोगः।
3. चमत्करणं चमत्कारः भावे प्रयोगः।
4. चमत्क्रियतेऽसौ चमत्कारः चमत्कृतार्थः।

5. चमत्कारोऽस्मिन् विद्यते इति चमत्कारः चमत्कारि काव्यम् अधिकरणे लाक्षणिकः प्रयोगः।

चमत्करोति यः काव्ये चमत्कारः स उच्यते।
चमतोऽपरपर्यायश्चाकचक्यं स्मृतं बुधैः ॥1 ॥
विधत्ते चाकचक्यं स चेतस्सु वासनावताम्।
विचित्रवचनैस्तैस्तैः काव्यरूपकवर्तिभिः ॥2 ॥
चितिरूपश्चमत्कारः स्वत एव प्रकाशते।
चित्तं दीपयति क्षिप्रं कृष्णमेघं तडिद् यथा ॥3 ॥

काव्यं पठतो रूपकं वा पश्यतः सहृदयस्य सङ्कल्पविकल्पात्मके मनसि सम्भावनातीतस्य कस्यचिदर्थस्य सहसाह्लादात्मिका चितिः प्रकाशो वा चमत्कारः। कल्पनाप्रधानमुक्तिवैचित्र्ययुतं शब्दालङ्कारार्थालङ्काररूपं चित्रकाव्यं यथा चित्तमानन्दसागरे निमज्जयति न तथा रसकाव्यम्। चमत्कृतिजनकत्वमलङ्कारत्वमित्येवमुक्तमलङ्कारस्य लक्षणम्। अलङ्कारश्चमत्कारस्य कारणम् चमत्कारश्चैतस्य कार्यम्। वस्तुतस्तु काव्यस्य सर्वेष्वेव घटकतत्त्वेषु चमत्कारस्यास्य प्राधान्येन संस्थिति र्दरीदृश्यते।

रसे सारश्चमत्कारो रीतौ सारश्चमत्कृतिः।
ध्वनौ सारश्चमत्कारः सोऽलङ्कारेऽपि वर्तते ॥1 ॥
रससारश्चमत्कारस्तं विना न रसो रसः।
असौ सारो ध्वनेश्चापि तं विना न ध्वनि र्ध्वनिः ॥2 ॥
न तिष्ठन्ति विना तेन गुणालङ्काररीतयः।
एवमस्य मता काव्येऽचला चावश्यकी स्थितिः ॥3 ॥
स्वाम्यमात्यसुहृत्कोशा राष्ट्रदुर्गबलानि च।
अङ्गानि सप्तसङ्ख्यानि राज्यस्य प्रथितानि वै ॥4 ॥
यथा सप्ताङ्गराज्येऽस्मिन् राजैव राजतेतराम्।
तथा मध्ये रसादीनां चमत्कारो विशिष्यते ॥5 ॥

अपि चायं चमत्कारस्तु अङ्गी एव अलङ्कारगुणरीतयश्च तस्याङ्गानि।

पुष्णन्तीमं चमत्कारं निखिले ये रसादयः।
व्रजन्ति ते तदङ्गत्वं काव्ये कविविनिर्मिते ॥6॥
तत्रोपस्थापनं तेषां कवेर्गौणं प्रयोजनम्।
मुख्यं प्रयोजनं काव्ये चमत्कारस्य संस्थितिः ॥7॥

अत एव रसादिष्वङ्गेषु चमत्कारस्याङ्गिनो नान्तर्भावः किन्तु चमत्कारे एव तेषामन्तर्भावो भवितुमर्हति। महाविषयोऽयं चमत्कारः। सिन्धावेव बिन्दूनामन्तर्भावो भवितुं शक्नोति न तु बिन्दौ विशालस्य सिन्धोरित्यस्ति अत्र सिद्धान्तपक्षः।

**काव्यस्य लक्षणम्**

वस्तुतस्तु चमत्कार एव काव्यस्यात्मा वर्तते। यथा पुरुषदेहे आत्मा प्रतिष्ठते तथैव काव्ये चमत्कारोऽवतिष्ठते। काव्यस्य लक्षणमेवंविधं प्रस्तूयते–

क्वाप्यनौचित्यसम्पृक्तं रसादिरहितं क्वचित्।
अद्भुताख्यानसंयुक्तं लोकवृत्तानुकीर्तनम् ॥1॥
अखण्डोचितशब्दार्थं विस्मयप्राणसङ्कुलम्।
चमत्कारात्मकं वाक्यं काव्यं भवितुमर्हति ॥2॥
सहितं रम्यशब्दार्थैश्चमत्कारेण पेशलम्।
काव्यत्वजातिमत् काव्यं प्रोच्यते वा कृतिः कवेः ॥3॥
काव्ये काव्यत्वमेतत्तु गवि गोत्वमिव स्थितम्।
सर्वेषु काव्यभेदेषु लभ्यतेऽनुगतं हि तत् ॥4॥

अखण्डैरुचितैः शब्दार्थैर्युतं रसभावगुणालङ्कारादिभिर्भूषितं कविप्रतिभास्फुरणसमुद्भूतं चमत्कारात्मकं वाक्यमेव काव्यम्। काव्यवाक्ये चमत्कारस्य प्राधान्येनावस्थितिः स्वीक्रियते। वस्तुतस्तु अदोषं गुणवत्काव्यमित्यादिवाक्यप्रतिपादितस्वर्गविशेषजनकतावच्छेदकं काव्यत्वमखण्डं कल्पनीयम्। अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव च वाचकम्।

(काव्यप्रकाश: 4, 47 वृत्तिः) न च वाक्यावस्थायां पदानि पदार्था वा विभिद्यन्ते यथा चित्रे नीलपीतरक्तादयः, पानके मधुराम्ललवणादयो, ग्रामरागे षड्जर्षभगान्धारादयः पृथक्त्वेन न प्रतीयन्ते तथैव क्रियाकारकविशेषणादिपदानि तदर्थवाक्यार्था अभेदेनैव प्रतीयन्ते। वाक्यार्थो हि पदपर्यायस्त्वखण्ड एवाभिधीयमानो दृश्यते। (काव्यप्रकाशः'4, 47 वृत्तिः विवेकटीका) अस्मिन् वाक्ये शब्दौचित्यमर्थौचित्यञ्च नितरामपेक्ष्येते। औचित्यरचितं वाक्यं सततं सम्मतं सताम्। (औचित्यविचारचर्चा 12 कारिका)। अत्र प्रतिपादिते काव्यलक्षणे चमत्कारस्यानिवार्यता कथिता रसालङ्कारादीनाञ्च विकल्पः प्रोक्तः। यथा सर्वासु गोव्यक्तिषु गोत्वजातिः स्वीक्रियते तथैव सर्वेषु चमत्कृतपदार्थेषु चमत्कारतत्त्वसंस्थितिः स्वीकार्या। एतत्सर्वं प्रतिपादितमलङ्कारकौस्तुभे (1, 2 वृत्तिः) आस्वादप्रधाना बुद्धिरपि चमत्कार उच्यते।.यथा बहिर्वस्तूनामनेकेषां मध्ये कस्यचित् सर्वोत्कृष्टत्ववतोद्भुतवस्तुनो दर्शनान्नेत्रस्य चमत्कारो जायते तत्र चमत्कारपदार्थो नेत्रस्य स्फारतारूपस्तथैवात्राप्यन्तर्वस्तूनां मध्ये रसतादशायां कस्यचिदद्भुतसुखस्यानुभवाज्जाता चित्तस्य स्फारतैव चमत्कारः। (अलङ्कारकौस्तुभः 5, 70 वृत्तिः)

अपि च चमत्कारपदस्यानेकानि अन्यानि पदानि पर्यायत्वेन प्रयुक्तानीति वक्तुं शक्यते। भरतनाट्यशास्त्रे प्रयुक्तं स्वादुतापदम्......... यथान्नं स्वादुतां नयेत्। ना.शा 6,32 ध्वन्यालोके प्रतिपादितम्–तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्॥, अत्र प्रीतिपदम् (तत्रैव 1.1) तत्पर्यायः। आनन्दो निर्वृत्यात्मा चमत्कारापरपर्याय इति (तत्रैव लोचनटीका) अभिनवभारतीटीकायामप्यनेके पर्याया एवं प्रदर्शिताः– संवित् चमत्कारः, तज्जोऽपि कम्पपुलकोल्लुकसनादिविकारश्चमत्कारः। स चातृप्तिव्यतिरेकेणाविच्छिन्नो भोगावेश इत्युच्यते। मनसश्चमत्करणं चमत्कार इति। तथा हि लोके सकलविघ्नविनिर्मुक्ता संवित्तिरेव चमत्कारनिर्वेशरसन-स्वादनभोगसमापत्तिलयविच्छित्त्यादिशब्दैरभिधीयते (भरतनाट्यशास्त्रम् 6, 33 अभिनवभारती टीका)। सौन्दर्यञ्च चमत्कृत्याधायकत्वम्। चमत्कृतिरानन्दविशेषः।

(रसगङ्गाधरः द्वितीयाननम्, उपमाप्रकरणम्)

**काव्यस्य निदर्शनानि–**

रसादिजश्चमत्कारो यस्मिन् काव्येऽधितिष्ठति।
चमत्काररसं काव्यं तदेव बुधसम्मतम्॥1॥
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥2॥
अत्र शोकात्समुत्पन्नः करुणोऽसौ रसध्वनिः।
जातश्चमत्कृतेस्तस्या हेतुरानन्ददायकः ॥3॥
वनितेति वदन्त्येतां लोकाः सर्वे वदन्तु ते।
यूनां परिणता सेयं तपस्येति मतं मम ॥4॥
परस्परतपःसम्पत्फलायितपरस्परौ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥5॥
तपस्यायाः फलं योषित् तपःफले उमाशिवौ।
रूपकोपमयोरेवं चमत्कारोऽत्र जायते ॥6॥
वराङ्गनाङ्गसौन्दर्यैः सुवर्णे रत्नसङ्गतैः।
चमत्कृतिमयैः काव्यैश्चित्तमाकृष्यते नृणाम्॥7॥

**चमत्कारगुणाः**– अस्मिन् चमत्कारे विशेषाधानहेतव इमे नवीनत्वादयः षड्गुणास्तिष्ठन्ति–

नवीनत्वमपूर्वत्वं मोहनं रमणीयता।
आकर्षणं स्फुरत्वं च चमत्कारगुणाः स्मृताः॥

प्रतिभाशालिनः कवेर्मस्तिष्के सहसा यो नवीनो विचारः (न्यू आइडिया) आविर्भवति स एव स्फुरत्वं, स्फुरता, स्फुरणा चेति नामभिः कथ्यते। इयं हि स्फुरणा काव्ये चमत्कारमावहति।

**चमत्कारस्य रसादिभिः सह सम्बन्धः**– चमत्कारस्य रसादिभिः सार्धं द्विविधः कार्यकारणभावरूपसम्बन्धो विद्यते। एकत्र चमत्कारो रसादीनां कारणम् अपरत्र च रसादयस्तस्य कारणम्। प्रथमं मतं साहित्यदर्पणे उद्धृतम्। अत्र

चमत्कारोऽयमन्येषां रसानां कारणम्। यथाह धर्मदत्त :-

रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।

तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः।

तस्माददद्भुतमेवाह कृती नारायणो रसम्। साहित्यदर्पणः 3, 3 वृत्तिः

अत्र रामचन्द्रेण टीकाकारेण विस्मयापरनामा चमत्कारोऽद्भुतरसस्य स्थायिभावो मतः। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः। यद्वा-अपरपर्यायोऽभिन्नः तत्प्राणत्वं चमत्कारसारत्वम्। सारः स्थिरांशः सर्वत्र शृङ्गारादौ चमत्कारसारत्वे चमत्कारस्थायिभावत्वे तस्मात् सर्वत्राद्भुतरससम्भवात्। साहित्यदर्पणः 3, 3 रामचन्द्रतर्कवागीशकृतविवृतिटीका

विस्मयोऽसौ चमत्कारश्चमत्कारोऽद्भुतो रसः।

चमत्काराच्चमत्कारी चमत्कारः प्रजायते॥

अपरं मतं विश्वेश्वरेण कविचन्द्रेण निरूपितम्। तत्र रसादयः कारणत्वेन निरूपिता :-

गुणं रीतिं रसं वृत्तिं पाकं शय्यामलङ्कृतिम्।
सप्तैतानि चमत्कारकारणं ब्रुवते बुधाः॥
चमत्कारचन्द्रिका प्रथमो विलासः पृ० 23

**चमत्कारसम्प्रदायः**

अद्यत्वे मेघदूताभिज्ञानशाकुन्तलादिकाव्यनाटकसमीक्षावसरे रसालङ्कारादितत्त्वानां रसालङ्कारादिसम्प्रदायानामेव च समुदाहरणं विधीयते किन्तु चमत्कारतत्त्वस्य चमत्कारसम्प्रदायस्य च विषये किञ्चिन्नोच्यते। यदा वयं सूक्ष्मेक्षिकया काव्यानि नाटकानि काव्यप्रकाशादिग्रन्थांश्च पठामस्तर्हि जानीमो यत्तेषु तेषु स्थलेषु चमत्कारतत्त्वस्य चमत्कारसम्प्रदायसम्बन्धिन्याः सामग्र्याश्च प्राचुर्येण समावेशो विहितः।

भवभूतेरभिधाप्रधाननाटकेषु, बाणस्य कादम्बर्यां, भारवेः किरातार्जुनीये कालिदासस्यपि च व्यञ्जनाप्रधानकाव्येषु नाटकेषु च स्फुट-चमत्कारः, अस्फुटचमत्कारः, स्फुटास्फुटचमत्कारश्च विलोक्यते। युक्तमेवेदमुच्यते-

क्वचिदयं स्फुटो भूतः करबदरसदृशः।

क्वचिदप्यस्फुटो जातो नारिकेलफलं यथा॥

क्वापि स्फुटास्फुटश्चायं कान्ताकुचमनोहरः।
नानारूपश्चमत्कारः सद्यश्चेतांसि कर्षति।।2।।

चमत्कारस्येमां महत्तां प्रदर्शयन्तीमाः परिकरकारिकाः-

आत्मा प्रोक्तश्चमत्कारः काव्यस्य विबुधैरसौ।
स एव काव्यजीवातुस्तेनैव काव्यकाव्यता॥3॥
काव्यहेतुरसौख्यातस्तस्मिन् काव्यप्रयोजनम्।
सर्वेषां सम्प्रदायानां तेनैव सम्प्रदायता॥4॥
सचमत्कारकाव्यस्य काव्यत्वमुपपद्यते।
अचमत्कारिकाव्यस्य काव्यत्वं नोपपद्यते।।5।।
क्वचित्प्रत्यक्षतः प्रोक्तः क्वचित्कैश्चित् परोक्षतः
ईदृक्काव्यचमत्कारो मयाऽप्यत्र निरूपितः॥6॥
चमत्कारे रति र्भूयाच्चमत्कारे मति र्भवेत्।
जयतात् स चमत्कारः कविवाक्षु च तिष्ठतात्॥7।।

अयं काव्यचमत्काराभिधो ग्रन्थः खण्डद्वयात्मकः। अस्य प्रथमे खण्डे काव्यसम्बद्धा अनेके विषयाः सिद्धान्ताश्च प्रतिपादिताः। आगामिनि द्वितीये खण्डे कतिपयावशिष्टकाव्यसम्बन्धिविचारप्रदर्शनानन्तरं चमत्कारतत्त्वस्य चमत्कारसम्प्रदायस्य च प्रतिपादनं सविस्तरं विधास्यते।

15/2 त्रिकूटानगरम्　　　　　　　　　　　　　　　　रामप्रतापः
जम्मू तवी 180012
तिथि : 2-10-2012

# भूमिका

## काव्यशास्त्र में चमत्कारतत्त्व

भरत से लेकर आधुनिक काल तक संस्कृतकाव्यशास्त्र की सुदीर्घ परम्परा में चमत्कारसम्बन्धी विचारों का चिन्तन तथा अनुचिन्तन अनवरत रूप से होता आ रहा है। इन विचारों को एकत्र करके आधुनिक अनुसन्धानात्मक पद्धति को अपनाकर उन्हें सुनियोजित रूप में पुनः प्रस्तुत करने की महती आवश्यकता है। रस, अलङ्कारादि विषयों पर तो अब तक बहुत कुछ लिखा जा चुका है किन्तु इस विषय पर और लिखने के लिए बहुत कुछ विपुल सामग्री प्राप्त हो रही है और नये नये तथ्यों का उद्घाटन हो रहा है।

जब किसी व्यक्ति के सामने कोई सुन्दर वस्तु आती है तो उसे देखने के लिए कुतूहल और उत्सुकता होती है। जब वह उसे देख लेता है तो उसे परमानन्द मिलता है। सुन्दर वस्तु का जब काव्य में चित्रण होता है तब उस काव्यगत सौन्दर्य से भी अनिर्वचनीय आनन्द की प्राप्ति होती है। इस सौन्दर्य-तत्त्व को आचार्यों ने रमणीयता, विच्छित्ति, वैचित्र्य, चमत्कृति और चमत्कारादि पदों से अभिहित किया है। काव्य में यदि चमत्कार होता है तो आनन्द की प्राप्ति होती है और यदि चमत्कार नहीं होता तो आनन्द भी नहीं मिलता। चमत्कार का अर्थ विस्मय और कुतूहल तो है ही काव्यास्वाद भी है। रसनिष्पत्ति के प्रसङ्ग में आचार्य अभिनव के मत को उद्धृत करते हुए आचार्य मम्मट ने बतलाया है कि शृङ्गारादि रस अलौकिक चमत्कार को उत्पन्न करने वाला होता है।[1] इस प्रकार चमत्कार शब्द एक ओर काव्यसौन्दर्य का वाचक है तो दूसरी ओर काव्यानन्द का भी बोधक है। इस चमत्कारपद का मोज़िज़ा उर्दू नाम है। अंग्रेज़ी में इसे मिरेकल, चार्म, वण्डर और मार्वल कहते हैं। महाकवि माघ ने कहा है–

क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः।[2]

---

1. *अलौकिकचमत्कारकारी शृङ्गारादिको रसः काव्यप्रकाश 4, 28 वृत्ति*
2. *शिशुपालवध 4, 171*

सच्ची सुन्दरता का रूप (लक्षण) वही है जो क्षण क्षण में नवीनता को धारण करे। सुन्दर वस्तु में नयापन होता है और यह नयापन ही आनन्द प्रदान करता है। सौन्दर्य की महिमा बताते हुए महाकवि जॉन कीट्स ने कहा है–

ए थिंग ऑफ ब्यूटी इज़ ए जॉय फॉर ऐवर।

सुन्दर वस्तु सदा ही आनन्ददायक होती है। उसको जब भी देखा जाये उसमें नयापन प्रतीत होता है और यह नयापन ही आनन्द का स्रोत है।

सहृदय सामाजिक काव्य के श्रवण और नाट्य के प्रेक्षण से तभी आनन्दित होता है जब इनमें विद्यमान कथासूत्र में कुतूहल बना रहे। वास्तव में कुतूहल ही एक ऐसा तत्त्व है जो काव्य में सब भावों तथा सब रसों को एक सूत्र में बाँधता है। काव्य और नाट्य में अन्य सब वस्तु, भाव और रस गौण हो जाते हैं और कुतूहल या चमत्कार की प्रधानता हो जाती है। वही काव्य, महाकाव्य, मुक्तक और नाटक प्रशंसा को प्राप्त करते हैं जिनमें चमत्कारोत्पादक सूक्तियां, भाव एवं रस समाविष्ट हों। प्रतिभावान् कवि मालाकार की भाँति विविध भाव एवं रस रूपी पुष्पों को कुतूहल रूपी सूत्र में गूंथकर कविता रूपी माला बना देता है। यह सुन्दर माला सहृदय सामाजिक के कण्ठ की शोभा बनकर अपनी चमत्कार रूपी सुगन्धि को चारों ओर बिखेर देती है।

औचित्य को भी चमत्कारी बताया है।[1]

आचार्य क्षेमेन्द्र ने चमत्कारविरहित काव्य को अनाकर्षक और निरुपयोगी बताया है।[2] उनका कहना है–

एकेन केनचिदनर्घमणिप्रभेण
काव्यं चमत्कृतिपदेन विना सुवर्णम्।
निर्दोषलेशमपि रोहति कस्य चित्ते
लावण्यहीनमिव यौवनमङ्गनानाम्॥[3]

---

1. *औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।*
*रसजीवितभूतस्य विचारं कुरुतेऽधुना॥*
*औचित्यविचारचर्चा तृतीय कारिका*

2. *कविकण्ठाभरण 3, 1 वृत्ति*

3. *कविकण्ठाभरण 3, 2*

सुन्दर युवतियों का गोरे चिट्टे रंग रूप वाला किन्तु लावण्य (सौन्दर्य-तत्त्व) से रहित तारुण्य जिस प्रकार अनाकर्षक होता है वैसे ही बहुमूल्य रत्न की प्रभा के बिना किसी एक थोड़े से भी खोट से युक्त सोना किसके चित्त में स्थान बनायेगा ? और एक भी चमत्कार भरे पद के बिना, थोड़े से भी दोष से रहित (सर्वथा निर्दोष) एवं सुन्दर वर्णावली से युक्त काव्य किसके चित्त को आकर्षित करेगा ? अर्थात् किसी के भी चित्त को आनन्दित नहीं करेगा।

इसका अभिप्राय यह है कि रत्नविहीन सुवर्णाभूषण, सौन्दर्यहीन युवती का यौवन और चमत्कारहीन कवि का काव्य तीनों ही सामाजिकों को आनन्द नहीं दिया करते।

इस विवेचन से यह स्पष्ट हो जाता है कि काव्य और नाट्य में चमत्कार तत्त्व का विशेष महत्त्व है।

**षट्काव्यसम्प्रदाय एवं चमत्कारसम्प्रदाय**

काव्य की आत्मा क्या है ? अर्थात् काव्य के भीतर ऐसा कौनसा जींवनाधायक तत्त्व रहता है जो इसे इतिहासपुराणादि से पृथक् करता है। इसके सम्बन्ध में विभिन्न आचार्यों में मतभेद रहता आया है। काव्यात्मत्व की मान्यता के आधार पर निम्नलिखित काव्यसम्प्रदाय प्रतिष्ठित होते आये हैं-

(1) रससम्प्रदाय
(2) अलङ्कारसम्प्रदाय
(3) रीतिसम्प्रदाय
(4) ध्वनिसम्प्रदाय
(5) वक्रोक्तिसम्प्रदाय
(6) औचित्यसम्प्रदाय

अन्तिम षष्ठसम्प्रदाय का प्रतिष्ठापन आचार्य क्षेमेन्द्र ने किया था। उनके समय से लेकर आधुनिक काल तक संस्कृतकाव्यशास्त्र में उपर्युक्त छः सम्प्रदाय स्वीकार किये जाते रहे हैं। क्षेमेन्द्र ने औचित्यसम्प्रदाय के प्रतिपादन के साथ साथ चमत्कारसम्प्रदाय को भी स्थान दे दिया था। किन्तु परवर्ती आचार्यों ने बहुत समय तक उस ओर अपना ध्यान ही नहीं दिया। यद्यपि क्षेमेन्द्र ने औचित्यविचारचर्चा में औचित्य को चमत्कारकारी बतला कर औचित्य के

महत्त्व को स्थापित किया था।[1] किन्तु इससे उन्हें जब मन का सन्तोष नहीं प्राप्त हुआ तो उन्होंने कविकण्ठाभरण में नये सिरे से चमत्कार को कवि तथा काव्य के लिए अनिवार्य तत्त्व घोषित करते हुए कहा–

न हि चमत्कारविरहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम्।[2]

चमत्काररहित कवि के भीतर कवित्व नहीं होता और चमत्काररहित काव्य के अन्दर भी काव्यत्व नहीं हुआ करता। उनकी यह भी धारणा है कि चमत्कार की उत्पत्ति में अक्षम कवि में कवित्व अर्थात् काव्यरचना की शक्ति (प्रतिभा) का ज्ञान नहीं होता।[3]

इस प्रकार आचार्य क्षेमेन्द्र ने अपनी प्रखर बुद्धि का उपयोग करके काव्य के दो नवीन सम्प्रदायों की स्थापना की। औचित्यविचारचर्चा में औचित्यसम्प्रदाय तथा कविकण्ठाभरण में चमत्कारसम्प्रदाय को प्रतिष्ठित किया। दैवदुर्विपाक से उत्तरवर्ती आचार्यों और समीक्षकों ने औचित्यसम्प्रदाय को स्वीकार करते हुए भी उसे अन्य सम्प्रदायों की तुलना में कम महत्त्वपूर्ण स्थान दिया है। और वे चमत्कारसम्प्रदाय से तो बहुत समय तक अनभिज्ञ रहते आये हैं।

चौदहवीं सदी में क्षेमेन्द्र के परवर्ती आचार्य विश्वेश्वर कविचन्द्र ने सर्वप्रथम चमत्कार को अपने काव्यलक्षण में समाविष्ट किया–

वागर्थौ सचमत्कारौ काव्यं काव्यविदो विदुः।[4]

चमत्कारयुक्त शब्द और अर्थ को काव्य के रूप में काव्य के विद्वान् जानते हैं। इसी प्रकार पण्डितराज जगन्नाथोत्तरवर्ती हरिदास ने कहा है–

विशिष्टशब्दरूपस्य काव्यस्यात्मा चमत्कृतिः।[5]

गुणयुक्तशब्दरूपकाव्य की आत्मा चमत्कार है। इसके बाद अनेक आचार्यों में अपने अपने काव्यलक्षणों में चमत्कारपद को समाविष्ट करने की दौड़ सी लग गई। इन काव्यलक्षणों में चमत्कारपद का समावेश होजाने से चमत्कारसम्प्रदाय प्रतिष्ठित हो गया है और अब इसको पृथक् सम्प्रदाय के रूप में मान्यता प्राप्त

---

1. *औचित्यविचारचर्चा 3 कारिका।*
2. *कविकण्ठाभरण 3, 1 वृत्ति*
3. *कविकण्ठाभरण तृतीय सन्धि पृ० 36*
4. *चमत्कारचन्द्रिका प्रथम विलास पृ० 23*
5. *काव्यालोक–डा. वी. राघवन् स्टडीज़ ऑन सम कन्सैप्ट्स ऑफ दी अलङ्कारशास्त्र 1942, पृ. 270.*

होने लगी है। उपर्युक्त छः सम्प्रदायों में इस सातवें चमत्कारसम्प्रदाय को सम्मिलित करने पर काव्यशास्त्र के काव्यसम्प्रदायों की कुल संख्या सात हो जाती है। यह सातवां सम्प्रदाय अन्य सम्प्रदायों की तुलना में सर्वाधिक महत्त्वपूर्ण है। इसमें अन्य रसादिसम्प्रदायों का भी अन्तर्भाव हो जाता है। समय समय पर उत्तरवर्ती आचार्यों ने चमत्कार को अन्य रसादि तत्त्वों का सार बताया है। परिकरकारिका इस प्रकार है–

रसे सारश्चमत्कारो रीतौ सारश्चमत्कृतिः।
ध्वनौ सारश्चमत्कारः सोऽलङ्कारेऽपि तिष्ठति॥

औचित्यसम्प्रदाय का आचार्यों और समीक्षकों के द्वारा अन्य सम्प्रदायों में ही अन्तर्भाव कर दिया जाता है। वक्रोक्ति भी चमत्कारकारिणी उक्ति होने के कारण चमत्कार के भीतर समा जाती है। इस प्रकार चमत्कारसम्प्रदाय में अन्य सम्प्रदायों का समावेश हो जाने के कारण चमत्कार का वर्चस्व अन्य सब तत्वों की तुलना में अधिक हो जाता है। चमत्कारसिन्धु में अन्य सम्प्रदायों के विचार बिन्दुओं का अन्तर्भाव तो सम्भव है किन्तु उनके विचारबिन्दुओं में इस सिद्धान्तसिन्धु का अन्तर्भाव नहीं हो सकता।

## चमत्कारसमर्थक आचार्य

चमत्कारसमर्थक आचार्यों को दो श्रेणियों में विभाजित किया जा सकता है। प्रथम श्रेणी में भरत, भामह, वामन, आनन्दवर्धन और कुन्तक जैसे आचार्य हैं जिन्होंने चमत्कारतत्त्व का स्पर्श तो किया है किन्तु उसको काव्य की आत्मा मानकर पूरा पूरा महत्त्व नहीं दिया है। इसके विपरीत उन्होंने अपने अपने अभीष्ट सम्प्रदाय का प्रधान रूप से प्रतिपादन किया है। इस कारण उनका नाम तत्तत्सम्प्रदायविशेष के साथ जोड़ा जाता रहा है। चमत्कारसम्प्रदाय का अप्रत्यक्ष समर्थन करने के कारण उनकी गणना चमत्कारसम्प्रदाय के आचार्यों में नहीं की जा सकती। दूसरी श्रेणी में क्षेमेन्द्र, विश्वेश्वर कविचन्द्र, विश्वनाथदेव, पण्डितराजगन्नाथ, हरिप्रसाद, छज्जूराम शास्त्री, वागीश्वरविद्यालङ्कार, वायुनन्दन पाण्डेय, कृष्णकान्त चतुर्वेद, रेवाप्रसाद द्विवेदी, जगन्नाथपाठक, अभिराजराजेन्द्रमिश्र, राधावल्लभ त्रिपाठी जैसे आचार्य आते हैं जिन्होंने चमत्कार को अपनी कृतियों में न केवल महत्त्वपूर्ण स्थान दिया है अपितु इस सम्प्रदाय का प्रत्यक्ष रूप से

प्रतिपादन एवं समर्थन किया है। मम्मटोत्तरकाल के अधिकांश आचार्यों ने चमत्कारसम्प्रदाय को अपना अधिक से अधिक समर्थन दिया है। क़ाव्यप्रकाश और साहित्यदर्पण के टीकाकारों ने भी चमत्कारसम्प्रदाय को मान्यता दी है। वस्तुत: रस, अलङ्कारादि समस्त काव्यसामग्री काव्य में सौन्दर्य उत्पन्न करके चमत्कार का ही आस्वाद कराती है। इस कारण इन सभी सम्प्रदायों का समन्वय इस सम्प्रदाय में हो जाता है। इसलिये चमत्कारसम्प्रदाय संस्कृतकाव्यशास्त्र में पूर्वपरिगणित इन सम्प्रदायों की तुलना में अधिक सक्षम एवं व्यापक है। विभिन्न काव्यशास्त्रीय ग्रन्थों एवं टीकाओं के आलोचनात्मक एवं तुलनात्मक अध्ययन करने से यही प्रतीत होता है कि प्राय: सभी आचार्यों ने किसी न किसी रूप में चमत्कारतत्त्व को अपनी कृतियों में स्थान दिया है। इस प्रकार चमत्कारतत्त्व का प्रत्येक सम्प्रदाय के साथ सीधा सीधा सम्बन्ध है। इस कारण यह सम्प्रदाय रस, ध्वनि आदि सम्प्रदायों के समकक्ष स्थान प्राप्त करने का अधिकारी तो है ही किन्तु इनसे अधिक ऊँचा स्थान भी इसको दिया जा सकता है।

आचार्य मम्मट के पूर्ववर्ती भरत, भामह, वामन, आनन्दवर्धन, कुन्तक और क्षेमेन्द्र द्वारा प्रवर्तित सम्प्रदायों में रस, अलङ्कार, रीति, ध्वनि, वक्रोक्ति, औचित्य एवं चमत्कार तत्त्वों को काव्य की आत्मा अर्थात् काव्य के प्रधानतत्त्व के रूप में प्रतिष्ठापित किया गया था। इस युग के सभी आचार्यों ने प्रत्यक्षतया अथवा अप्रत्यक्षतया रसादितत्त्वों के साथ औचित्यतत्त्व का सम्बन्ध भी जोड़ा है। आचार्य आनन्दवर्धन ने वाच्य और वाचक (शब्दादि) की रसादिविषयक औचित्य की दृष्टि से जो योजना है उसी को महाकवि का मुख्य कर्म बताया है।[1] आचार्य क्षेमेन्द्र ने भी औचित्यविचारचर्चा में औचित्य को रससिद्धकाव्य का प्राण बताया है तथा उसे चमत्कारकारी भी कहा है।[2] इस प्रकार उन्होंने औचित्य को रस एवं चमत्कार दोनों के लिए उपयोगी माना है। क्षेमेन्द्र ने औचित्यविचारचर्चा में औचित्य के 27 भेद बताये हैं और उन्होंने इन्हें पदौचित्य और वाक्यौचित्यादि के नाम दिये हैं। उन्होंने चमत्कारविरहित कवि

---

1. *वाच्यानां वाचकानाञ्च यदौचित्येन योजनम्।*
   *रसादिविषयेणैतत् कर्म मुख्यं महाकवे:।।* — *ध्वन्यालोक 3, 32*
2. *औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।*
   *रसजीवितभूतस्य विचारं कुरुतेऽधुना।।* — *औचित्यविचारचर्चा कारिका 3*

को कवि और चमत्काररहित काव्य को काव्य मानने से साफ़ इनकार कर दिया है।[1] इस चमत्कारयुक्त काव्य के दस भेद माने हैं जिनमें शब्दगत, अर्थगत, शब्दार्थगत, अलङ्कारगत और रसगत चमत्कार भेद सम्मिलित हैं।[2] इस प्रकार इन आचार्यों के दृष्टिकोण को सम्मुख रखते हुए यह आवश्यक हो जाता है कि रसादितत्त्वों के साथ औचित्य और चमत्कार का भी समन्वय कर लिया जाए। ये रस, अलङ्कारादि तत्त्व औचित्य की सहायता से काव्य में चमत्कार को उत्पन्न कर देते हैं। इस प्रकार रसौचित्य और अलङ्कारादि के औचित्य का चमत्कार के साथ जन्यजनकभावसम्बन्ध है। ये रसादि काव्यतत्त्व जनक हैं और चमत्कार जन्य है। औचित्य काव्य का प्राण है और चमत्कार उसकी आत्मा है जैसे प्राण और आत्मा से विहीन देह शवमात्र रहता है और उसका कतई कोई उपयोग नहीं होता वैसे ही औचित्य और चमत्कार से विहीन काव्य निरर्थक और अनुपयोगी माना जा सकता है। इसी प्रकार रसाभासभावाभासादि में विद्यमान अनौचित्य भी काव्य का प्राण कहा गया है तथा मम्मट प्रतिपादित निःशेषच्युत (काव्यप्रकाश 1, 2) आदि भी उत्तम काव्य के उदाहरण माने जाते हैं।

## चमत्कारसम्प्रदाय की वर्तमान स्थिति

आजकल विभिन्न विश्वविद्यालयों और संस्कृतविश्वविद्यालयों एवं उनके अधीन शिक्षणसंस्थाओं में संस्कृतसाहित्य के काव्य, महाकाव्य, नाटक तथा काव्यशास्त्रीय ग्रन्थ पढ़ाये जाते हैं। काव्यों और नाटकों को पढ़ाते समय जब उनकी आलोचना की जाती है तो उनमें रस, अलङ्कार, रीति, गुण, दोष, प्रकृतिचित्रण, नायकनायिकाभेद, सन्धि तथा कथासम्बन्धी घातप्रतिघात आदि घटकतत्त्वों के सम्बन्ध में विस्तारपूर्वक बताया जाता है। इसी प्रकार संस्कृतकाव्यशास्त्र के अध्ययन के समय रस, अलङ्कार, रीति, ध्वनि, वक्रोक्ति एवं औचित्य सम्प्रदायों के सम्बन्ध में बड़ी बारीकी के साथ विवेचन किया जाता है। किन्तु काव्य और काव्यशास्त्र की इस चर्चा में चमत्कारतत्त्व और चमत्कारसम्प्रदाय का नाम तक नहीं लिया जाता। इस प्रकार चमत्कार के रसादि

---

1. *न हि चमत्कारविरहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम्।* *औचित्यविचारचर्चा 3, 1, वृत्ति*
2. *कविकण्ठाभरण 3, 2 वृत्ति*

अङ्गों की चर्चा तो होती है किन्तु अङ्गी चमत्कार कतई उपेक्षित रहता है। अन्य सम्प्रदायों के प्रवर्तकों और समर्थकों के नाम और विचार भी बहुत विस्तार के साथ बताये जाते हैं किन्तु इस सम्प्रदाय से सम्बद्ध आचार्यों के सम्बन्ध में कोई जानकारी नहीं दी जाती। पिछले एक दो दशकों से चमत्कारसम्प्रदाय के सम्बन्ध में कुछ शोधपत्र तो लिखे जाने लगे हैं और कुछ पुस्तकों में चमत्कार का नाम भी लिया जाने लगा है परन्तु इस दिशा में अभी और अधिक प्रयत्न करने की आवश्यकता है। अभी तक हमारी दृष्टि में संस्कृत में लिखा कोई ऐसा ग्रन्थ नहीं देखने में आया है जिसमें चमत्कारसम्बन्धी विचारों का सर्वाङ्गीण एवं विस्तृत विचार हो। डॉ० कृष्णकुमार ने काव्यशास्त्रविमर्श नामक संस्कृत के काव्यशास्त्र के इतिहास में चमत्कारसम्प्रदाय के समर्थक विश्वेश्वर कविचन्द्र की चमत्कारचन्द्रिका और विश्वनाथदेव के साहित्यसुधासिन्धु का समावेश किया है। उनके इस प्रयास से काव्यशास्त्र के समीक्षकों और अध्येताओं को चमत्कार के सम्बन्ध में जानने के लिए प्रेरणा प्राप्त होगी। यदि चमत्कार एवं चमत्कारसम्प्रदाय के सम्बन्ध में और अधिक लेख लिखे जायें और गोष्ठियां और सम्मेलन आयोजित किये जायें तो चमत्कार एवं चमत्कारसम्प्रदाय को पठन पाठन और अनुसन्धान में समुचित स्थान मिलने लगेगा।

### रसाद्यौचित्यजन्यचमत्कार

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः[1] इत्यादि उदाहरण में नायकनायिकागत उचित रतिभाव की अभिव्यक्ति की गई है इसलिये यहां ध्वन्यौचित्यजन्य, शृङ्गार रसौचित्यजन्य, सङ्घटनौचित्यजन्य एवं विभावाद्यौचित्यजन्य चार प्रकार का चमत्कार है। ध्वनि के इन भेदों में से किसी एक भी भेद वाली कवि वाणी पुराने अर्थ के साथ सम्बन्ध रखती हुई भी नई हो जाती है।[2]

निःशेषच्युतचन्दनं स्तनतटम्[3] इत्यादि उदाहरण में अनौचित्यप्रवर्तितरति होने के कारण शृङ्गाररसाभासजन्यचमत्कार है।[4] आचार्य मम्मट ने यः कौमारहरः[5], इत्यादि जो उदाहरण दिया है वहाँ औचित्यप्रवर्तितरति होने के कारण वह

1. काव्यप्रकाश 4, 30

2. ध्वन्यालोक 4, 2

*3. काव्यप्रकाश 1, 2*

*4. सम्भोगाभासोऽभिव्यज्यते। काव्यप्रकाश 1, 2 विवरणटीका*

*5. काव्यप्रकाश 1,1*

शृङ्गाररसौचित्यजन्यचमत्कार का उदाहरण है। इसी प्रकार अलङ्कारौचित्यादिजन्य चमत्कारभेदों के उदाहरण अन्य काव्यों और काव्यशास्त्रीय ग्रन्थों में देखे जा सकते हैं। काव्य में औचित्य और चमत्कार के महत्त्व को इन परिकरकारिकाओं में बताया गया है–

यथौचित्यनिर्वाहो लोकेऽस्मिन् क्रियते जनैः।
तथा विधीयते काव्ये विबुधैस्तैः कवीश्वरैः॥1॥
रसाद्यौचित्ययुक्तं वै काव्यं सर्वैः प्रशस्यते।
तत्र स्थितमनौचित्यं मृष्यते न हि केनचित्॥2॥
औचित्यजचमत्कारः प्रीतिं परां प्रयच्छति।
तस्मात् काव्येषु नाट्येषु कर्तव्यं तन्निवेशनम्।।3।।

आचार्य आनन्दवर्धन ने चारुत्वोत्कर्ष (चमत्कारातिशय) को वाच्य और व्यङ्ग्य के प्राधान्याप्राधान्य के निर्णय करने की कसौटी माना है। जिसमें अधिक चमत्कार होता है वह प्रधान और कम चमत्कार वाला अप्रधान (गौण) हो जाता है।[1] अन्य आचार्यों ने भी चमत्कार का महत्त्व माना है।[2] इसी प्रकार अभिनवगुप्त ने चारुत्वप्रतीति (चमत्कारप्रतीति) को काव्य की आत्मा कहा है और इस मत को विवादहीन बतााया है।[3] अलङ्कार में वाच्यचारुत्व और ध्वनि में व्यङ्ग्यचारुत्व रहता है।[4]

प्राचीन भरतादि आचार्यों से प्रवर्तित काव्यसम्प्रदायों में जिन रसादियों को काव्य की आत्मा बताया जाता है वे या तो स्वयं ही चमत्कार रूप हैं अथवा चमत्कार के कारण हैं। इसी चमत्कार के सौन्दर्य, चारुत्व और विच्छित्ति नाम हैं। सौन्दर्यमलङ्कारः सौन्दर्य का नाम ही अलङ्कार है अथवा चमत्कृतिजनकत्वमलङ्कारत्वम्–सौन्दर्योत्पादक होना ही अलङ्कार का धर्म है।

1. *चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्यविवक्षा। ध्वन्यालोक 1, 13 वृत्ति*
2. *(क) वागर्थौ सचमत्कारौ काव्यं काव्यविदो विदुः। चमत्कारचन्द्रिका प्रथमविलास, पृ० 2-3*
   *(ख) स्वविशिष्टजनकता....चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्। रसगङ्गाधर 1,1 काव्यलक्षण*
   *(ग) विशिष्टशब्दरूपस्य काव्यस्यात्मा चमत्कृतिः।*
   *डॉ० वी० राघवन्–सम् कन्सैप्ट्स आफ दी अलङ्कारशास्त्र पृ० 270*
3. *यच्चोक्तं चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्यात् इति तदङ्गीकुर्मः एवं नाम्नि खल्वयं विवाद इति। ध्वन्यालोक 1, 13 लोचनटीका।*
4. *व्यङ्ग्यव्यञ्जकसम्बन्धतया ध्वनेः।*
   *वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः।। ध्वन्यालोक 1, 11 वृत्ति।*

रीति अर्थात् सङ्घटनाविशेष भी सौन्दर्य की हेतु है। काव्यस्यात्मा ध्वनिः–काव्य की आत्मा ध्वनि है। यहां सारभूत तत्त्व सौन्दर्य माना जा सकता है। आचार्य अभिनवगुप्त ने भी ध्वनि और अलङ्कारों को चारुत्व अर्थात् चमत्कार का हेतु बताया है।[1] रसादि ये सभी तत्त्व शब्दार्थ रूप काव्य में रहते हैं और चमत्कार के उत्पादक और अभिव्यञ्जक होते हैं। वस्तुतः यह चमत्कार ही काव्य का प्राण है और इसी को आत्मा भी कहा जा सकता है और इसका अन्य रसादितत्त्वों के साथ जन्यजनकभावसम्बन्ध है। ये निम्नलिखित परिकरकारिकायें हैं–

चितिरूपश्चमत्कारः प्रकाशानन्दनिर्भरः।
सर्वेषु काव्यभेदेषु संस्थितः परिलक्ष्यते।
तत्त्वान्तराणि काव्ये तु भवन्तु न भवन्तु वा।
विस्मयगर्भश्चमत्कारः स्थिरं काव्यस्य जीवितम्॥2॥
चमत्कारात्मके काव्ये तदङ्गानि रसादयः।
अङ्गीभूयोपकुर्वन्ति पुष्णन्ति तञ्च सर्वदा॥3॥
जन्यतेऽसौ चमत्कारस्त्वलङ्काररसादिभिः।
जन्यजनकभावो वै तन्मध्ये सुप्रतिष्ठितः।॥4॥

आचार्य क्षेमेन्द्र ने औचित्यविचारचर्चा तथा कविकण्ठाभरण में औचित्य और चमत्कार तत्त्वों का अत्यन्त विशद रूप से प्रतिपादन किया है। क्षेमेन्द्रप्रवर्तित चमत्कारसम्प्रदाय का समर्थन उत्तरवर्ती विश्वेश्वर कविचन्द्र, पण्डितराजजगन्नाथ एवं हरिप्रसाद ने पूरी तरह से किया है। किन्तु क्षेमेन्द्रोत्तरवर्ती अधिकांश आचार्यों तथा आधुनिक समीक्षकों ने क्षेमेन्द्र के विचारों से पूरा लाभ नहीं उठाया। पाश्चात्य आलोचकों ने भी औचित्य का महत्त्व माना है। अरस्तू ने दृश्य, घटना, काल, भाषा के प्रयोग में औचित्य का महत्त्व माना है। लाँजाइनस ने शब्दप्रयोग के औचित्य को कविता का प्राण कहा है। हौरेस ने घटना, छन्द, भाषा आदि के औचित्य को महत्त्वपूर्ण स्थान दिया है। इसी प्रकार दान्ते, पोप, मैथ्यू आर्नल्ड, आई० ए० रिचर्ड्स भी इसका महत्त्व स्वीकार करते हैं। महाकवि जौन कीट्स की प्रसिद्ध उक्ति–ए थिङ्ग आफ ब्यूटी इज़ जॉय फौर एवर से सौन्दर्य या चमत्कार की भी महत्ता स्पष्ट हो जाती है।

---

1. *अत्र व्यङ्ग्यो...आक्षेपो...चमत्कारकारणम्।*
*ध्वन्यालोक 1, 13 लोचनटीका*

## रसाद्यौचित्यजन्य चमत्कारसमीक्षा पद्धति

उपर्युक्त अध्ययन के आधार पर यह व्याप्ति बनाई जा सकती है– औचित्यजचमत्कारसत्त्वे काव्यसत्त्वमौचित्यजचमत्काराभावे च काव्यत्वाभावः। संस्कृत एवं हिन्दी काव्यशास्त्र में प्रवर्तित वर्तमान समीक्षापद्धति में क्षेमेन्द्रानुमोदित विचारों का समावेश करते हुए आज औचित्यजन्यचमत्कारप्रधाना इस समीक्षा पद्धति को अपनाने की आवश्यकता है।

वस्तुतः शब्द, अर्थ, गुण, रस, अलङ्कार, रीति और ध्वनि आदि विभिन्न काव्याङ्गों अर्थात् काव्य के घटकतत्त्वों के मेल से ही काव्य की सर्जना की जाती है। किसी अकेले तत्त्व से काव्य का निर्माण नहीं होता इसलिए इसमें सभी तत्त्वों का समावेश किया जाता है। उदाहरणार्थ मेघदूत काव्य तथा उत्तररामचरित नाटक की आलोचना करते समय रस, अलङ्कार, गुण, रीति, दोष, प्रकृतिचित्रण, घातप्रतिघात आदि काव्यतत्त्वों को निर्दिष्ट करके उनके उदाहरणों के रूप में श्लोकों को प्रस्तुत किया जाता है। इस समीक्षापद्धति में सर्वोपरि दोष यह है कि इसमें औचित्य और चमत्कार इन दोनों सम्प्रदायों को समुचित स्थान नहीं प्राप्त हुआ है। औचित्य रससिद्धकाव्य का जीवन तथा चमत्कार का कारण होता है। यह औचित्य काव्य के सभी अङ्गों में रहने वाला व्यापक और जीवनाधायक तत्त्व है।

यही बात चमत्कार के सम्बन्ध में कही जा सकती है। इस प्रचलित समीक्षा में जैसे रस और अलङ्कारादि को पृथक् तत्त्व के रूप में स्वीकार किया जाता है वैसे ही औचित्य और चमत्कार को भी अलग अलग पदार्थ के रूप में मान लेना चाहिए। इन दोनों के महत्त्व और व्यापकता को देखते हुए इनका सम्बन्ध भी रसादि के साथ जोड़ना चाहिए क्योंकि ये सारे तत्त्व पहले औचित्य के साथ सम्बन्ध स्थापित करते हैं फिर उसे साथ लेकर काव्य में चमत्कार की सृष्टि करते हैं। किसी भी प्रकार की काव्यसमीक्षा में औचित्यतत्त्व और चमत्कारतत्त्व का विशिष्ट योग आवश्यक है। रसालङ्कारादि का अनुचित प्रयोग काव्यगत चमत्कार को नष्ट कर देता है।

इस समीक्षा के आधार पर कालिदासादि कवियों के मेघदूतादि काव्यों की आलोचना करते समय औचित्य और चमत्कार युक्त निम्नलिखित प्रमुख दस भेदों का अनुसन्धान करना चाहिए–

1. रसौचित्यजन्यचमत्कार

2. अलङ्कारौचित्यजन्यचमत्कार

3. गुणौचित्यजन्यचमत्कार

4. रीत्यौचित्यजन्यचमत्कार

5. ध्वन्यौचित्यजन्यचमत्कार

6. वक्रोक्त्यौचित्यजन्यचमत्कार

7. पदाद्यौचित्यजन्यचमत्कार

8. क्रियाद्यौचित्यजन्यचमत्कार

9. विभावाद्यौचित्यजन्यचमत्कार

10. इतिवृत्तौचित्यजन्यचमत्कार

इस समीक्षा के अन्तर्गत आने वाले इन भेदों का निर्माण आचार्य आनन्दवर्धन एवं आचार्य क्षेमेन्द्र के द्वारा दिखाये गये भेदों के आधार पर किया गया है। ध्वन्यालोक में औचित्य के 9 भेद स्वीकार किये गये हैं और कविकण्ठाभरण में चमत्कार के 10 भेद बताये गये हैं। इसके अतिरिक्त शृङ्गारादि नौ रसों के औचित्यजन्य भेदों की भाँति नौ प्रकार के शृङ्गारादिरसानौचित्यजन्यभेद भी माने जा सकते हैं।

## आधुनिक काल में चमत्कारपरक अनुसन्धान

**पण्डितराज जगन्नाथोत्तरवर्ती संस्कृत काव्यशास्त्र के आचार्य एवं समालोचक**—पण्डितराजगन्नाथोत्तरवर्ती संस्कृतकाव्यशास्त्र के आचार्यों एवं समालोचकों को कालक्रम की दृष्टि से तीन विभागों में बाँटा जा सकता है—

1. प्राचीन आचार्य 2. नवीन आचार्य एवं 3. अतिनवीन आचार्य। भरत मुनि से लेकर मम्मट तक प्राचीन हैं। विश्वनाथ से लेकर साहित्यसुधासिन्धु के रचयिता विश्वनाथदेव तक नवीन हैं। पण्डितराज जगन्नाथ से लेकर आचार्य जगन्नाथ पाठक तक वर्तमान समय के आचार्य अतिनवीन हैं। पण्डितराज जगन्नाथोत्तरकाल आधुनिक काल है।

आचार्य क्षेमेन्द्र और आचार्य मम्मट से पहले संस्कृत काव्यशास्त्र में रस, अलङ्कार, रीति, ध्वनि और वक्रोक्ति इन पाँच काव्यसम्प्रदायों की स्थापना हो चुकी थी। आचार्य क्षेमेन्द्र ने औचित्यविचारचर्चा में औचित्य तथा कविकण्ठाभरण में चमत्कारसम्प्रदाय प्रतिष्ठापित किया। भारतीय काव्यशास्त्र के प्राचीन आचार्य और समीक्षक औचित्यसहित छः सम्प्रदायों को तो मान्यता देते रहे किन्तु सातवें चमत्कारसम्प्रदाय को समुचित महत्त्व नहीं दे पाये। समस्त संस्कृतकाव्यशास्त्र के उद्भव और विकास पर दृष्टिपात करने से यह तथ्य उभर कर सामने आता है कि काव्य एवं काव्यशास्त्र में चमत्कारतत्त्व एवं चमत्कारसम्प्रदाय का महत्त्व अन्य रसादितत्त्वों एवं सम्प्रदायों की तुलना में बिलकुल भी कम नहीं है। इस कारण इस सम्प्रदाय की गणना भी प्रधान काव्यसम्प्रदायों में की जानी चाहिए। इस चमत्कारसम्प्रदाय को भी सम्मिलित करके कुल सात काव्यसम्प्रदाय हो जाते हैं।

विगत सात दशकों में आधुनिक विद्वानों का ध्यान चमत्कार की ओर आकर्षित हुआ है। डा० वी० राघवन् (सम् कन्सेप्ट्स ऑफ अलङ्कारशास्त्र 1942 ई.) डा० महेश भारतीय (चमत्कार और काव्यानन्द), डा० कृष्णलाल शुक्ल (काव्यानन्द तथा चमत्कार), डा० रमेशचन्द्र लवानियां (चमत्कार सिद्धान्तः पुनर्विचार की आवश्यकता)- (ये तीनों ही लेख-काव्यस्वरूप, सौन्दर्य एवं चमत्कार सम्पादक डा० महेश भारतीय गाज़ियाबाद 1987 ई. पुस्तकाकार में प्रकाशित हैं।) डा० मृदुला जोशी (संस्कृत काव्यपरिभाषाओं का आलोचनात्मक अध्ययन) डा० लीना केशवानी (संस्कृत काव्यशास्त्र में चमत्कारतत्त्व पी० एच० डी० शोधप्रबन्ध 2010 ई० बनारस हिन्दू विश्वविद्यालय वाराणसी) ने इस दिशा में महत्त्वपूर्ण कार्य किया है।

कविराज राजशेखर तथा आचार्य क्षेमेन्द्र के काव्यसिद्धान्तों का तुलनात्मक अध्ययन नामक कृति में डॉ० विष्णुदत्त शर्मा ने इन दोनों आचार्यों के चमत्कार विषयक विचारों का भी उल्लेख किया है। डॉ० सूर्यनारायण द्विवेदी ने भारतीय समीक्षा सिद्धान्त नामक अपनी पहली कृति के एक अध्याय में चमत्कृति सिद्धान्त का विवेचन किया है और चमत्कृतिसिद्धान्त नामक दूसरी रचना में चमत्कारतत्त्व तथा चमत्कारसम्प्रदाय का युक्तिपूर्वक प्रतिपादन किया है। इन पङ्क्तियों के लेखक द्वारा लिखे गये ये तीन ग्रन्थ प्रकाशित हुए हैं- 1. मम्मटोत्तर युग में

वृद्धिरेचि (अष्टाध्यायी 6, 1, 88) अवर्णात् परो य एच् एचि च पूर्वो योऽवर्णस्तयोः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति ब्रह्मैडका, ब्रह्मौदनः।

14. साहित्यदर्पणः 10, 62 वृत्तिः

15. नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥
चित्रै र्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभि र्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥
यत्र मिथः अन्योऽन्यं संलापं सम्यग् भाषणं कुर्वते तत्तु आमुखं विज्ञेयम् प्रकृताभिनयस्य मुखे प्रारम्भे विधेयत्वादिति भावः। तथा नाम्ना प्रसिद्ध्या संज्ञया प्रस्तावयति प्रकृताभिनयविषयं सूचयति या सा प्रस्तावनाऽपि ज्ञेया।

साहित्यदर्पणः 6, 31-32 तथा लक्ष्मी टीका।

16. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतु र्भू र्मा ते सङ्गोऽस्त्वकर्मणि॥
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥
श्रीमद्भगवद्गीता 2, 47-48

17. अथ चेत् त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
सम्भावितस्य चाकीर्ति र्मरणादतिरिच्यते॥
श्रीमद्भगवद्गीता 2, 33-34

18. क्लैब्यं मा स्म गमः पार्थ नैतत् त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप॥ तत्रैव 2, 3

19. (कः) हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥
तत्रैव 2, 37

(खः) अर्जुनस्य प्रतिज्ञे द्वे न दैन्यं न पलायनम्।

अर्जुनविषये प्रसिद्धाऽस्ति उक्तिरेषा किन्तु श्रीमद्भगवद्गीतायां नोल्लिखिता।

(गः) नष्टो मोहः स्मृति र्लब्धा त्वत्प्रसादान्मयाऽच्युत।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥
श्रीमद्भगवद्गीता 18, 73

20. सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥
उत्तररामचरितम् 1, 3

21. काव्यैकपात्रविलसद् गुणदोषदुग्ध-
पाथः समूहपृथक्करणे विदग्धाः।
जानन्ति कर्तुमभियुक्ततया विभागं
चन्द्रावदातमतयः कविराजहंसाः॥
कविकण्ठाभरणम् 4,1

22. (कः) I. तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।
काव्यप्रकाशः 1, 4

II. अलौकिकचमत्कारकारी शृङ्गारादिको रसः।
काव्यप्रकाशः 4, 28 वृत्तिः अभिनवगुप्तमतम्।

(खः) शब्दार्थौ सहितौ.. काव्यम्-शब्दार्थौ काव्यं वाचको वाच्यश्च द्वौ सम्मिलितौ काव्यम्।

तेन यत् केषाञ्चिन्मतं कविकौशलकल्पितकमनीयातिशयः शब्द एव केवलं काव्यम् इति केषाञ्चिद् वाच्यमेव रचनावैचित्र्य-चमत्कारकारि काव्यमिति द्वयं पक्षमपि निरस्तं भवति।
वक्रोक्तिजीवितम् 1, 7 तथा वृत्तिः।

(गः) औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।
रसजीवितभूतस्य विचारं कुरुतेऽधुना॥
औचित्यविचारचर्चा तृतीया कारिका

(घः) उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते॥
कीदृशी वैदग्ध्यभङ्गीभणितिः वैदग्ध्यं विदग्धभावः कविकर्मकौशलं तस्य भङ्गी विच्छित्तिः तया भणितिः

विचित्रैवाभिधा वक्रोक्तिरित्युच्यते।
वक्रोक्तिजीवितम् 1, 10 तथा वृत्तिः

(ङः) वक्रोक्तिश्च चमत्कारकारिण्युक्तिः। साहित्यसुधासिन्धुः 1, 4 वृत्तिः

(चः) रम्यं शब्दार्थयुगलं काव्यमस्माभिरिष्यते।
एवं हि चमत्कारविशिष्टं शब्दार्थयुगलं काव्यमिति फलितम्।
छज्जूरामशास्त्रिकृतसाहित्यबिन्दुः 1, 5 तथा वृत्तिः

(छः) विद्युत्समुन्मेष इवान्धकारे करोति या चेतसि चाकचाक्यम्।
वक्रोक्तिवैचित्र्यविरोधिताद्यैश्चितिश्चमत्कारपदोदितासौ।।
वागीश्वरविद्यालङ्कारकृतवैदिकसाहित्यसौदामिनी 2, 3

23. पदे काव्यचमत्कारे इति। काव्यचमत्कारपदस्य नैकविधा इमे विग्रहाः सम्भवन्ति।

1. काव्यचमत्कारः- काव्यमेव चमत्कार इति काव्यचमत्कारः। काव्यं चमत्कार इति लौकिकविग्रहे सति काव्यं चमत्कारश्च इमे द्वे पदे समर्थे पदे वर्तेते अतः समर्थः पदविधिः (अष्टाध्यायी 2,1,1) इत्यनेन पदविधिः सम्प्राप्तः। अनन्तरं च सुप् सुपा (अष्टाध्यायी 2, 1, 4) इत्यस्य योगविभागस्य सुबन्तं चमत्कारपदं सुबन्तेन काव्यपदेन सह समासत्वमाप्नोति एवं काव्यचमत्कारपदस्य सिद्धि र्जाता। उपमितं व्याघ्रादिभिः सामान्याप्रयोगे (अष्टाध्यायी 2, 1, 55) उपमेयमुपमितं च सुबन्तं सामर्थ्यादुपमानवचनैः व्याघ्रादिभिः सह समस्यते तत्पुरुषसमासश्च भवति आकृतिगणश्चायम् तेन मुखकमलम् इति रीत्या अत्र काव्यचमत्कारपदे उपमितसमासः रूपकालङ्कारश्च वर्तते। अत्र विशेषणं विशेष्येण बहुलम् (अष्टाध्यायी 2, 1, 57) विशेषणवाचि सुबन्तं विशेष्येण विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते नीलोत्पलम् इतिवत्। अत्र विशेषणविशेष्यभावोऽपि दृश्यते यतो ह्यत्र प्रथमायामिदं रूपं जातम् अतोऽस्य समासस्य प्रथमातत्पुरुष इति नाम जातम्। अयं समासः कर्मधारयतत्पुरुषनाम्नाऽपि प्रसिद्धिं यातः।

अपि चास्य काव्यचमत्कारपदस्य एवंविधोऽपि विग्रहः-काव्यं

मित्रं यस्य सः काव्यमित्रः इत्यर्थे काव्यपदेन सह चमत्कारपदस्य समासे जाते काव्यमित्रचमत्कारः इति रूपम् जातम्। ततः शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम् (सिद्धान्तकौमुदी 1068 वार्तिकम्) इति वार्तिकेन मित्रपदस्य लोपे जाते काव्यचमत्कार इति रूपं सिध्यति। यथा शाकः प्रियो यस्य स शाकप्रियः इत्यत्र शाकप्रियपदेन सह पार्थिवपदस्य समासे जाते शाकप्रियः पार्थिव इति रूपं जायते ततः तत्र प्रियपदस्य लोपे सञ्जाते शाकपार्थिव इतिमात्रं रूपमवशिष्यते तथैवात्रापि काव्यचमत्कारपदे मित्रपदस्य लोपे काव्यचमत्कार इति रूपं जातम् बहुव्रीहौ प्रथमातत्पुरुषसमासे च। काव्यं च चमत्कारश्च काव्यचमत्कारौ तयोः प्रतिपादको ग्रन्थः काव्यचमत्कारः इतरेतरद्वन्द्वसमासयुक्तोऽयं काव्यशास्त्रीयार्थे लाक्षणिकः प्रयोग उपादानलक्षणायाम्।

काव्यचमत्कारावित्यत्रोत्तरपदे पुल्लिङ्गप्रयोगः परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः (अ० 2, 4, 25) इति सूत्रात्।

2. काव्यचमत्कारः-काव्यं प्राप्तः चमत्कारः इति लौकिकविग्रहे सति अत्र प्रयुक्ते काव्यपदे कर्मणि द्वितीया (अष्टाध्यायी 2, 1, 2) इति सूत्रेण द्वितीया प्राप्ता। ततः अनेन द्वितीयान्तेन काव्यपदेन सह द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः (अष्टाध्यायी 2, 1, 20) इति सूत्रेण द्वितीयान्तं काव्यपदं प्राप्तपदेन सह समस्यते ततः काव्यप्राप्त इति रूपं जातम्। काव्यप्राप्तपदेन सह चमत्कारपदस्य समासे जाते काव्यप्राप्तचमत्कार इति रूपं भूतम्। ततः पूर्वोक्तेन शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम् इति वार्तिकेन काव्यपदोत्तरवर्तिनः प्राप्तपदस्य लोपे सञ्जाते काव्यचमत्कार इति रूपं सिद्धम्। अत्र कर्मणि द्वितीया विभक्तिः तत्पुरुषसमासश्च। अतएवायं द्वितीयातत्पुरुषसमासो जातः।

3. काव्यचमत्कारः-काव्येन चमत्कार इति काव्यचमत्कारः। कर्तृकरणयोस्तृतीया (अष्टाध्यायी 2, 3, 18) इति सूत्रेण तृतीयान्तस्य काव्यपदस्य चमत्कारपदेन सह समासे सञ्जाते काव्यचमत्कार इति रूपं जातम्। अत्र करणे प्रयोगात् तृतीयातत्पुरुषसमासो जातः।

4. काव्यचमत्कारः-काव्याय चमत्कार इति काव्यचमत्कारः। अत्र काव्यपदेन सार्धं चमत्कारपदस्य चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः

(अष्टाध्यायी 2, 1, 36) इति सूत्रेण तादर्थ्ये समासो जातः। तस्मै हितं तदर्थम् काव्याय हितं काव्यार्थम्। तादर्थ्ये चतुर्थी वाच्या (सिद्धान्तकौमदी 943 वार्तिकम्)। मुक्तये हरिं भजते। अश्वाय घासः अश्वघास इतिवत् काव्यचमत्कारपदप्रयोगो विहितः। अत्र चतुर्थीतत्पुरुषसमासो विद्यते।

5. काव्यचमत्कारः- काव्याज्जातश्चमत्कारःकाव्यचमत्कारः। अत्र जनिकर्तुः प्रकृतिः (अष्टाध्यायी 1, 4, 30) जायमानस्य हेतुरपादानं भवति। अपादाने पञ्चमी (अष्टाध्यायी 2, 3, 28) इत्यनेन अपादाने पंचमी भवति। पुत्रात्प्रमोदो जायते इतिवत्। अत्र पञ्चमीतत्पुरुषसमासो जातः।

6. काव्यचमत्कारः-काव्यस्य चमत्कारः इति काव्यचमत्कारः। अत्र काव्यपदस्य कृते षष्ठी शेषे (अष्टाध्यायी 2, 3, 50) इति सूत्रेण कारकप्रतिपादकार्थव्यतिरिक्ते स्वस्वामिभावादिसम्बन्धिनि शेषे षष्ठी विभक्तिः प्राप्ता। ततः षष्ठी (अष्टाध्यायी 2, 2, 8) इति सूत्रेण काव्यपदेन सार्धं चमत्कारपदस्य समासो विहितः एवं काव्यचमत्कार इति रूपं जातम्। अत्र षष्ठीसमासः सम्पन्नः।

7. काव्यचमत्कारः- काव्ये चमत्कारः इति काव्यचमत्कारः। अत्र पूर्वम् काव्यपदस्य आधारोऽधिकरणम् (अष्टाध्यायी 2, 4, 45) इति सूत्रेण अधिकरणसञ्ज्ञा सञ्जाता ततः सप्तम्यधिकरणे (अष्टाध्यायी 2, 3, 36) इति सूत्रेण वैषयिके आधारे सप्तमी विभक्ति र्विहिता काव्यम् आधारः चमत्कारश्चाधेयः। अत्र सप्तमीतत्पुरुषसमासो जातः।

24. स्वस्वामिभावादिसम्बन्ध इति-अत्रादिपदेनावयवावयविभावादिसम्बन्धस्य ग्रहणम्। राज्ञः पुरुष इति स्वस्वामिभावसम्बन्धस्योदाहरणम्। अत्र पुरुषस्य प्राधान्यं विशेष्यत्वात् राज्ञोऽप्राधान्यं विशेषणत्वात् विशेषणस्य च परार्थत्वात्।

अष्टाध्यायी 2, 3, 50 काशिकाविवरणपञ्जिका जिनेन्द्रबुद्धिपादविरचिता

**टिप्पणी**—काव्यचमत्कारपदे काव्यस्याप्राधान्यं चमत्कारस्य च प्राधान्यम्। अत्रावयवावयविभावसम्बन्धे षष्ठी। पितुः पुत्रः पितृपुत्र इत्यत्र यथा जन्यजनकभावे षष्ठी विद्यते एवमत्रापि।

25. काव्यशास्त्रीयश्चमत्कारः काव्यशास्त्रीयचमत्कारः काव्यचमत्कारः।

शास्त्रीयपदलोपश्च शाकपार्थिवादीनां न्यायात्।

26. काव्यचमत्कार इत्यस्मिन् पदे काव्यमेव चमत्कार: अथवा काव्यरूप: चमत्कार: प्रथमातत्पुरुष: (कर्मधारयाख्य:) समास:। अत्र रूपकालङ्कारस्य प्राप्ति र्जाता रूपारोपात् मुखं चन्द्र: इतिवत्। काव्यं च चमत्कारश्च इति काव्यचमत्कारौ तौ अधिकृत्य कृतोऽयं ग्रन्थ:। अधिकृत्य कृते ग्रन्थे (अष्टाध्यायी 4, 3, 87) इतिसूत्रेण अत्र द्वितीया विभक्ति: अण् प्रत्ययश्च प्राप्तौ। एवमत्र काव्यचमत्कारपदसिद्धिर्जाता काव्यचमत्कार: इति पदे य: अण् प्रत्ययोऽपि प्रास: तस्य अण: लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम् अ. 2, 3, 87 इति वार्तिकेन लोपो जायते। अत्र काव्यपुरुषचरितनामकी आख्यायिकाऽपि वर्तते अस्मात् अस्य वार्तिकस्य सङ्गतिर्भवति।

27. साहित्यसुधासिन्धु: 1, 4

28. (क:) काव्यालङ्कारकारिका 190

    (ख:) संस्कृतकाव्यशास्त्र का आलोचनात्मक इतिहास पृ० 451, 452

29. अग्निपुराणम् 339, 1-2

30. कुवलयानन्द: उपमालङ्कार: 6 वृत्ति:

31. सुभाषितरत्नभाण्डागारम् ग्रन्थसमाप्तौ विज्ञप्ति:

32. डॉ० सूर्यकान्तरचित संस्कृत हिन्दी इंग्लिश कोश एक विहङ्गम दृष्टि पृ० XVIII

33. क्वचित् क्वचित् परिवर्तितपाठा:। अधस्तात् मूलश्लोक:-

    स्तोकं मेऽध्ययनं मति: परिमिताऽस्यां दिश्ययं चादिमो<br>
    यत्नो मे पथदर्शको न सुलभो वेदार्णवो दुस्तर:।<br>
    चापल्यं तु विचिन्त्य बाल्यसुलभं मन्ये मनीषाधना:<br>
    क्षंस्यन्ति स्खलितानि तानि कृपया सौजन्यधन्या जना:॥

    वागीश्वरविद्यालङ्कारकृता वैदिकसाहित्यसौदामिनी भूमिका, श्लोकसंख्या 104

☒☒☒

# द्वितीयोल्लासः

## काव्यपुरुषचरितम्

**काव्यपुरुषसम्बद्धा चमत्कारसुगन्धिता।**
**कर्षन्ति सत्वरं चित्तं वैदिकीलौकिकीकथाः ॥1॥**

काव्यपुरुष से सम्बन्धित एवं चमत्कार से सुगन्धित वैदिकी तथा लौकिकी दोनों प्रकार की कथा बहुत जल्दी चित्त को आकर्षित करती हैं।

**वैदिकी कथा**

**विलक्षणं मनोहारि प्रीतिकरं कलात्मकम्।**
**स्वरूपं काव्यपुंसोऽस्य वेदेषु प्रतिपादितम् ॥2॥**

अनोखा, मन को आकर्षित करने वाला (इस) काव्यपुरुष का आनन्ददायक और कलापूर्ण (कलाप्रधान) अपना आकार (अथवा लक्षण) वेदों में बताया गया है।

**सहस्रशीर्षसंयुक्तः सहस्राक्षः सहस्रपात्।**
**अतिष्ठत् स भुवं वृत्वा पुराणः पुरुषो महान्[1] ॥3॥**

हज़ारों सिरों से युक्त, हज़ारों आँखों वाला और हज़ारों पैरों वाला वह पुरातन महान् पुरुष (ईश्वर) इस पृथिवी को व्याप्त करके (सदैव) विद्यमान है।

**तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।**
**छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत[2] ॥4॥**

सबको (ज्ञान का) दान देने वाले उस यज्ञरूप पुरुष (परमपिता परमेश्वर) से (ऋग्वेद की) ऋचायें, सामवेद के मन्त्र उत्पन्न हुए और उससे ही (अथर्ववेद के) छन्द (मन्त्र) पैदा हुए और यजुर्वेद भी उससे प्रादुर्भूत हुआ।

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**ऊरु तदस्य यद् वैश्यः पद्भ्यां शूद्रोऽजायत**[3] ॥5॥

ब्राह्मण इस पुरुष का मुख था, क्षत्रिय भुजायें थीं इसकी जो दोनों जांघें थीं वे ही वैश्य थीं और इसके पैरों से शूद्र की उत्पत्ति हुई।

**टिप्पणी**– इस मन्त्र में वैदिक वर्णव्यवस्था की ओर भी संकेत है। समाज रूपी पुरुष का शरीर ब्राह्मण रूपी मुख वाला है, क्षत्रिय इसकी भुजायें हैं, इसका मध्यभाग वैश्य है और इसके पांव शूद्र हैं।

**सत्यमहं गभीरोऽस्मि जातवेदास्तथा व्रती।**
**वेदकाव्येन विख्यातो वच इदमथर्वणः**[4] ॥6॥

मैं सचमुच ही गम्भीर, सभी पदार्थों को जानने वाला तथा व्रती (दृढ़ संकल्प वाला) हूँ और वेदकाव्य की रचना करने के कारण मैं (सर्वत्र) प्रसिद्ध हो गया हूं। उस डांवाडोल न रहने वाले स्थिरमति पुरातनपुरुष का (कहा हुआ) यह वचन है। यह अथर्ववेद की उक्ति है इसका यह भी अर्थ है।

**टिप्पणी**– अथर्ववेद के दो मन्त्रों में यह बात प्रश्नोत्तर के रूप में कही गई है कि हे परम पुरुष! आप किस काव्य के लिखने के कारण गम्भीर और सर्वज्ञ माने जाते हो? इसके उत्तर में उनके द्वारा बताया गया है कि वेदकाव्य के कारण ही मैं इन गुणों के लिए विख्यात हुआ हूँ।

**स पर्यगाज्जगत्सर्वं मनीषी परिभूः कविः।**
**प्रजाभ्यश्चापि वेदार्थान् व्यदधादादिपूरुषः**[5] ॥7॥

विद्वान्, सर्वव्यापक उस (क्रान्तदर्शी) कवि (प्रभु) ने सारा जगत् व्याप्त कर लिया था। (इसके साथ ही) प्रजाओं (के कल्याण) के लिए भी उस आदिपुरुष (परमात्मा) ने वेद एवं उनके अर्थों का (उन्हें उपदेश देने के लिए) निर्माण किया।

**कवितरोऽपरो नास्ति नान्यो धीरतरः क्वचित्।**
**जानासि भुवनानि त्वं मायी त्वत्तो बिभेति सः**[6] ॥8॥

काव्यपुरुष से श्रोता (प्रशंसक) कह रहा है-तुमसे बढ़कर और दूसरा कवि (विद्वान्) नहीं है और तुमसे बढ़कर और कोई बड़ा धीर पुरुष नहीं है। तुम सारे भुवनों (के लोगों) को जानते हो इसीलिए वह मायावी पुरुष तुमसे डरता रहता है।

**टिप्पणी**– ईश्वर के क्रान्तदर्शी होने से छल छिद्र वाले पुरुष अपने पापों को उससे छिपा नहीं पाते हैं। अतएव वे दण्डभय के कारण भयभीत रहते हैं।

**अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति।**
**देवस्य पश्य काव्यं न ममार न जीर्यति[7] ॥9॥**

जीवात्मा पास रहने वाले उस (पुरातन) पुरुष को न (कभी) छोड़ पाता है और पास रहने वाले उसे देखता (भी) नहीं है। हे जीवात्मा! तू (उस) प्रकाशमय प्रभु के वेदज्ञान रूपी काव्य को देख (उसका अध्ययन अध्यापन कर)। यह काव्य न तो विनष्ट होता है और न ही पुराना होता है।

**टिप्पणी**–प्रभु से दूर होना भी सम्भव नहीं है और उसे पाना भी आसान नहीं है। उसका बनाया वेदकाव्य नित्य नवीन रहता है। इसका अध्ययन और मनन करते रहना चाहिए। इसमें अन्य लौकिक और आध्यात्मिक विषयों का समावेश तो है ही उत्तम काव्य की विशेषतायें भी पाई जाती हैं।

**यः कालेनानवच्छिन्नस्तस्याशेषजगद्गुरोः।**
**विबुधामोदि निःश्वासः श्रव्यं काव्यं बृहस्पतेः[8] ॥10॥**

जो (परमपुरुष परमेश्वर) काल की परिधि से ढका नहीं है (अतएव इससे बाहर है) उस सारे संसार के गुरु बृहस्पतिरूप (परमात्मा) पुरुष का निःश्वास रूप यह श्रव्यकाव्य (वेद) विद्वानों को आनन्दित करने वाला है।

**निर्ममे चतुरो वेदान् यो विद्यासमलङ्कृतान्।**
**वन्द्यः स खलु सर्वेषां काव्यपुरुष आदिमः ॥11॥**

(अनेक) विद्याओं से विभूषित चारों वेदों को जिसने बनाया वह सबसे पहला काव्यपुरुष परमात्मा निश्चय ही सबके लिए वन्दनीय है।

**लौकिकीकथा:**

**वेदकाव्यविदः पुंसो गुरुकुलनिवासिनः।**
**प्रस्तूयते कथैकैषा महाभारतवर्तिनी[9] ॥12॥**

गुरुकुल (के आश्रम) में रहने वाले और वेदकाव्य को जानने वाले अर्थात् वैदिक विद्वान् काव्यपुरुष की महाभारत में विद्यमान यह एक कथा प्रस्तुत की जा रही है।

**आर्ष्टिसेनो मुनि र्जातः सिन्धुद्वीपे महातपाः।**
**अध्येतुं सकलान् वेदान् निश्चयमकरोदसौ ॥13॥**

सिन्धुद्वीप में परम तपस्वी आर्ष्टिसेन नामक मुनि उत्पन्न हुआ। उसने सारे वेदों को पढ़ने का निश्चय कर लिया।

**पठनमपि चारब्धं नित्यं तेन यथाविधि।**
**समाप्तिं किन्तु नायाता विद्या वेदार्थबोधिनी ॥14॥**

उसने विधि (नियम) के अनुसार पढ़ना भी प्रारम्भ कर दिया परन्तु वेदों के अर्थों को बताने वाली विद्या समाप्त होने में आती ही नहीं थी।

**निर्विण्णमानसो भूत्वा तेपेऽसौ कठिनं तपः।**
**प्राप्तवांस्तत्प्रभावेण वेदज्ञानमनुत्तमम् ॥15॥**

इसके बाद दुःखी मन वाला होकर उसने कठिन तप किया और उसके प्रभाव से उसने जिससे बढ़कर कोई उत्तम नहीं है ऐसा अर्थात् सबसे अधिक उत्कृष्ट वेदज्ञान प्राप्त किया।

**स विद्वान् वेदमर्मज्ञः सिद्धोऽप्यभून्मुनीश्वरः।**
**सिन्धुद्वीपोऽपि तद्योगाद् ब्राह्मण्यं लब्धवांस्तदा ॥16॥**

वह मुनिराज वेदरहस्यज्ञाता विद्वान् एवं सिद्धि प्राप्त करने वाला सिद्धपुरुष भी हो गया और उसके योगदान से उस समय (उसकी निवासभूमि) वह सिन्धु द्वीप भी ब्राह्मण्य (ब्राह्मणोचित यज्ञ, याग, वेदाध्ययन, योग, ध्यान, पूजन आदि) कर्मों को प्राप्त करने लगा।

**टिप्पणी**-ब्राह्मण्य का अर्थ है ब्राह्मणोचित सत्कर्म-इनमें ब्रह्मसम्बन्धी दार्शनिक विचार, यज्ञादि सत्कर्म सम्मिलित हैं। वह आर्ष्टिसेन ऋषि स्वयं भी वेदज्ञानी बन गया और उसने सारे सिन्धुद्वीप के लोगों को भी अपने जैसा सच्चरित्र बना दिया।

**अध्याप्य चतुरो वेदान् स्वीयान् शिष्यानुपागतान्।**
**कृत्वा साधूनि कर्माणि जगाम त्रिदिवं मुनिः ॥17॥**

(पढ़ने के लिए) आये हुए अपने विद्यार्थियों को चारों वेदों का पढ़ाकर और (जीवन भर) भले कामों को करके वह मुनि स्वर्ग चला गया।

**कथां पठति यो नित्यं वेदज्ञस्य तपस्विनः।**
**पापानि तस्य नश्यन्ति भवति निर्मलं मनः ॥18॥**

जो (उस) वेदज्ञ और तपस्वी (मुनि) की कथा को प्रतिदिन पढ़ता है उसके पाप दूर हो जाते हैं और मन (भी) मलरहित हो जाता है।

**द्वितीयकथा**

**सारस्वतस्य पुंसोऽस्यानूचानस्य विपश्चितः।**
**कथान्या दृष्टिमायाति महाभारतवर्णिता[10] ॥19॥**

महाभारत में वर्णित सरस्वती के पुत्र वेदपाठी विद्वान् काव्यपुरुष की (यह) दूसरी कथा आँखों के सामने आती है।

**टिप्पणी**—अनूचान पारिभाषिक पद है। इसका अर्थ वेदपाठी विद्वान् है। इस विद्वान् के भीतर वेदमन्त्रों के सस्वरपाठ को करने की क्षमता होती है। ऐसा विद्वान् स्वयं तो वेदों के अर्थों को समझता ही है दूसरों को भी वह उनके अर्थों को समझा देता है। वह निरन्तर वेदों के अध्ययन अध्यापन में संलग्न रहते हुए 1. शिक्षा (उच्चारणविज्ञान) 2. व्याकरण 3. ज्योतिष 4. छन्द 5. निरुक्त एवं 6 कल्प इन छः वेदाङ्गों का भी पठनपाठन करता रहता है। इस प्रकार के स्वाध्यायप्रेमी मुनि के ऊपर यावज्जीवमधीते विप्रः-विद्वान् ब्राह्मण जीवन भर पढ़ता रहता है यह नियम चरितार्थ होता है।

**बभूव पूर्वमाचार्यो महामति र्महातपाः।**
**ब्रह्मचारी मुनिः ख्यातो दधीच इति नामकः ॥20॥**

(बहुत) पहले बड़ी बुद्धि वाला विद्वान्, महान् तपस्वी, ब्रह्मचारी दधीच नाम से प्रसिद्ध एक मुनि उत्पन्न हुआ।

**अजनयच्च तच्छुक्रं प्राप्य सरस्वती सुतम्।**
**सर्वलक्षणसम्पन्नं विद्वांसं लोकभावनम् ॥21॥**

और उस (मुनि) के वीर्य (निषेचन) को प्राप्त करके सरस्वती ने सारे शुभलक्षणों से युक्त विद्वान् और संसार को प्रभावित करने वाले पुत्र को उत्पन्न किया।

**टिप्पणी**-ज्योतिषशास्त्र के अनुसार मनुष्य के ललाट, हस्त एवं पाद में शङ्खचक्रादि शुभलक्षण होते हैं।

**सारस्वत इति ख्यातोऽसावासीदतिबुद्धिमान्।**
**स्वल्पायुष्येव सञ्जातो वेदविद्याविशारदः ॥22॥**

सारस्वत (सरस्वती के पुत्र) इस नाम से प्रसिद्ध वह (मुनि) अत्यधिक बुद्धि वाला था। थोड़ी सी उम्र में ही वह वेदविद्या में निपुण हो गया।

**स्वाध्यायमकरोन्नित्यं विद्याया अर्जने रतः।**
**अल्पाहारी श्रमी त्यागी मुनिवृत्तिमधारयत् ॥23॥**

विद्या के संग्रह में संलग्न होकर वह प्रतिदिन स्वाध्याय करता था। अल्प भोजन करने वाला, परिश्रमी और त्यागी रहते हुए मुनियों जैसी प्रकृति (स्वभाव) को ग्रहण करने वाला हो गया था।

**पदवाक्यप्रमाणज्ञः सदस्यासीत्स वाक्पटुः।**
**साङ्गेषु सर्ववेदेषु प्राप्ता तेन विदग्धता ॥24॥**

व्याकरणशास्त्र, मीमांसाशास्त्र और न्यायदर्शन को जानने वाला वह (सरस्वतीपुत्र) सभास्थल में भाषण देने में चतुर था। छः अंगों वाले (शिक्षा, व्याकरण, ज्योतिष, छन्द, निरुक्त और कल्प इन अङ्गों से युक्त) वेदों के विशिष्ट प्रकार के ज्ञान में उसने बहुत अधिक कुशलता प्राप्त कर ली थी।

**आकृष्टवानृषीन्सर्वान् स्वीयै र्लोकोत्तरै र्गुणैः।**
**समाकर्षन्ति चेतांसि प्रकृत्या गुणशालिनः ॥25॥**

अपने अलौकिक गुणों से उसने सारे ऋषियों को (अपनी ओर) आकर्षित कर लिया था। गुणों से अलङ्कृत (गुणी) जन अपने स्वभाव (आदत) से (लोगों) के चित्तों को (अपने बस में) करने के लिए (अपनी ओर) खींचा ही करते हैं।

**अल्पायुषं तमागत्य प्रोचु र्वचो महर्षयः।**
**बालः सन्नपि भूयास्त्वं गुरु र्नो वेदशिक्षकः ॥26॥**

थोड़ी आयु वाले (भी) उस (सारस्वत) के पास आकर महर्षियों ने इस वचन को कहा-तुम बालक होते हुए भी वेदों की शिक्षा देने वाले हमारे गुरु बन जाओ।

**न हायनै र्न पलितै र्महान् कोऽपीह जायते।**
**अस्माभिः क्रियते धर्मो योऽनूचानो स नो महान्[11] ॥27॥**

न तो (दीर्घायु होने के कारण लम्बे) वर्षों से और न ही पके हुए श्वेत केशों से कोई भी पुरुष महान् होता है। हमने यह धर्म (नियम व्यवस्था) बना दिया है कि जो अनूचान (वेदविद् और वेदविद्या में निष्णात) है वही हमारे लिए महान् (बड़ा गुरु) है।

**तेषां तद् वचनं श्रुत्वा प्रत्युवाच महामुनिः।**
**शिष्यत्वमुपगच्छध्वं यूयं मे विधिपूर्वकम् ॥28॥**

उन ऋषियों के उस वचन को सुनकर उस महामुनि ने यह प्रत्युत्तर दिया कि तुम विधिपूर्वक मेरे शिष्यभाव को प्राप्त करो अर्थात् मेरे शिष्य बन जाओ।

**ततोऽसौ विनयोपेतान् जिज्ञासून् समागतान्।**
**शिष्यानध्यापयामास चतस्रो वेदसंहिताः ॥29॥**

इसके बाद उस ऋषि ने विनयशील, जिज्ञासु (जानने की इच्छा रखने वाले) आये हुए उन शिष्यों को चारों वेदसंहितायें पढ़ाईं।

**गुरूणां स्मरणं कृत्वा ध्यानावस्थितमानसः।**
**नरः पठन् कथामेतामृद्धिं सिद्धिमवाप्नुते ॥30॥**

गुरुजनों को याद करके ध्यान में स्थिरचित्त वाला होकर इस कथा का पाठ करने वाला पुरुष वैभव और सफलता को प्राप्त करता है।

**तृतीयकथा**

**अस्ति बाणकृतिश्चैका हर्षचरितसंज्ञिका।**
**सरस्वतीसुतस्यैषा कथा तत्रापि लभ्यते ॥31॥**

और हर्षचरित नाम वाली बाण की एक रचना (गद्यकाव्य) है वहां भी यह सरस्वतीपुत्र की कथा मिलती है।

दुर्वाससस्तु शापेन ब्रह्मलोकनिवासिनी।
मर्त्यलोकं समागत्य जन्म लेभे सरस्वती ॥32॥

मुनि दुर्वासा के शाप से ब्रह्मलोक में रहने वाली सरस्वतीदेवी ने मनुष्य लोक (पृथिवीलोक) में आकर जन्म लिया।

जाता यौवनसम्पन्ना कालं प्राप्य शनैः शनैः।
यूनां चित्तं तथा दृष्टिं सममेव चकर्ष सा ॥33॥

(वह) धीरे धीरे समय पाकर यौवन से भर गई अर्थात् वह युवती हो गई और वह युवकों के चित्त और आंख इन दोनों को एक ही साथ आकर्षित कर लेती थी।

अशेषरूपसम्पत्ती र्नायिकालङ्कृतीस्तथा।
तस्यै प्रदाय बालायै रिक्तहस्तोऽभवद् विधिः[12] ॥34॥

सम्पूर्णरूपसम्पदाओं और नायिकाओं के अलङ्कारों को उस युवती कन्या को प्रदान करके विधाता खाली हाथ हो गये अर्थात् किसी और को देने के लिए उनके पास कुछ नहीं बचा।

**टिप्पणी**-भरतमुनि ने नाट्यशास्त्र के सामान्यप्रकरण (नाट्यशास्त्र 11, 4-6) में बताया है कि नायिकाओं के हावभावों में रहने वाले कुछ मानसिक आन्तरिक विकार होते हैं जिन्हें अलङ्कार कहा जाता है। ये नायिकालङ्कार बाह्य लौकिक अलङ्कारों से पृथक् हैं और ये उनके आन्तरिक सौन्दर्य की वृद्धि करते हैं।

गुणानां सङ्गमस्तेषां परस्परविरोधिनाम्।
तस्यामेकत्र कन्यायां जनै र्द्रष्टुमशक्यत ॥35॥

उन एक दूसरे के विरोधी (अमर्ष और क्षमादि) गुणों का मेल उस (युवती) कन्या के भीतर एक ही जगह लोगों के द्वारा देखा जा सकता था।

अवाप्तुमधिकं ज्ञानं सङ्गतिं च महात्मनाम्।
निर्मायाश्रममेकं साऽवसच्छोणनदीतटे ॥36॥

अधिक ज्ञान तथा महात्माओं की सङ्गति पाने के लिए शोणनदी के किनारे पर वह एक आश्रम बनाकर रहने लगी।

ब्रह्मचर्यं व्रतं वृत्वा शिवाराधनतत्परा।
यौवन एव सञ्जाता तपःपूता तपस्विनी॥37॥

और ब्रह्मचर्य के व्रत का वरण करके शिव की पूजा में लगकर वह (भरी) जवानी में ही तप से पवित्र तपस्विनी हो गई।

अपरे सरितातीरे गहने च्यावने वने।
आच्छादिता लतावृक्षैरासीदेकाऽपरा कुटी॥38॥

उस नदी के दूसरे तट पर च्यावन नामक घने जंगल में लता और वृक्षों से ढकी हुई एक दूसरी (सुन्दर) कुटी थी।

न्यवसत्तत्र विख्यातस्तापसश्च्यवनो मुनिः।
अजीजनत्सुकन्यायां पुत्रं दधीचनामकम्॥39॥

वहां उस कुटिया में प्रसिद्धिप्राप्त तपस्वी च्यवन (नामक) ऋषि रहते थे। उन्होंने सुकन्या (नामक) पत्नी में दधीच नाम वाला एक पुत्र उत्पन्न किया।

कालेनासौ युवा जातो बालः सुलक्षणै र्युतः।
दधौ मुखे परां दीप्तिं व्यायामक्षुण्णगात्रवान्॥40॥

(बहुत सारे) उत्तम लक्षणों से युक्त वह बालक समय के साथ साथ (समय पाकर) युवक हो गया। वह अपने मुख पर बहुत बड़ी चमक को धारण करता था और वह व्यायाम से गठे हुए शरीर वाला अर्थात् व्यायाम के कारण अनावश्यक चर्बी से रहित ठोस और कसी हुई देह वाला था।

यथा शस्त्रे तथा शास्त्रे सम्प्राप्ता तेन दक्षता।
दुर्लभं प्रायशो लोके प्रावीण्यं द्विप्रकारकम्॥41॥

जैसे शस्त्रविद्या में उसने निपुणता प्राप्त की थी वैसी (ही) उसने शास्त्र-विद्या में भी प्राप्त की। अधिकतर संसार में दोनों प्रकार की प्रवीणता मुश्किल से ही प्राप्त हुआ करती है।

विप्रक्षत्रियधर्माणां तस्मिन् दृष्ट्वा तु सङ्गमम्।
आश्चर्यस्य परां काष्ठां प्राप्नुवन् विस्मिता जनाः॥42॥

ब्राह्मण और क्षत्रियों के (विशेष) धर्मों (गुणों का) उसके भीतर मेल देखकर विस्मित लोग आश्चर्य की परम सीमा को प्राप्त कर रहे थे अर्थात् बहुत अधिक चकित हो रहे थे।

**पुनः सरस्वतीनाम्ना विख्यातेयं सुकन्यका।**
**रतिरिवापरा जाता दधीचनेत्रगोचरा ॥43॥**

(मर्त्य लोक में) दोबारा (भी) सरस्वती नाम से प्रसिद्ध दूसरी रति के समान सुन्दरी यह कन्या (उस) दधीच की नेत्रेन्द्रिय का विषय बनी अर्थात् उसने इसे देखा।

**परस्परगुणाकृष्टौ प्रीतिमासाद्य तावुभौ।**
**बद्धौ सूत्रे विवाहस्य कालं सुखेन निन्यतुः ॥44॥**

एक दूसरे के गुणों से वे दोनों आकर्षित होकर (पारस्परिक) प्रेम को पाकर विवाह के सूत्र में बंधकर सुखपूर्वक समय को बिताने लगे।

**अथ तस्याः सरस्वत्याः पुत्ररत्नमजायत।**
**पितेवासौ बुधो जातः सारस्वताभिधःसुतः ।।45।।**

इसके बाद उस सरस्वती से (एक) पुत्ररत्न उत्पन्न हुआ। (अपने) पिता की भांति वह सारस्वत नामक पुत्र विद्वान् बन गया।

**योगे पतञ्जलिः साक्षाद् विद्यायां स बृहस्पतिः।**
**विक्रमे कुशलः पार्थो धर्मे मूर्तो युधिष्ठिरः ॥46॥**

वह योग (की साधना) में साक्षात् मुनि पतञ्जलि था और विद्या में बृहस्पति (देवताओं का गुरु) था। पराक्रम में वह चतुर अर्जुन था और धर्म में मूर्तिमान् युधिष्ठिर था।

**ज्ञानांशुभिस्तदीयैस्तु दीप्रमासीदिदं जगत्।**
**दिवि समागते भानौ भूमण्डलं प्रकाशते ॥47॥**

उस (सरस्वती पुत्र की) ज्ञान रूपी किरणों से यह जगत् प्रकाशित था। द्युलोक में सूर्य के आ जाने पर (सारा) भूमण्डल प्रकाशित हो जाता है।

**मन्दोऽप्यमन्दतां याति क्षुद्रः प्राप्नोति गौरवम्।**
**अकविस्तनुते काव्यं स्मृत्वा सनातनं गुरुम् ॥48॥**

उस प्राचीन गुरु का स्मरण (और ध्यान) करके मूर्ख भी पाण्डित्य को प्राप्त कर लेता है, छोटा व्यक्ति भी बड़प्पन पा लेता है तथा जो व्यक्ति कवि नहीं है वह भी काव्यनिर्माण कर लेता है।

**कारयन् प्रातिभं कार्यं भावयन् हृदयं सताम्।**
**असौ सारस्वतः कुर्याद् विदुषां सर्वदा शुभम्॥49॥**

कवियों द्वारा प्रतिभा से समुत्पन्न कार्य अर्थात् कविप्रतिभा से जनित काव्य की रचना को करवाता हुआ और (सहृदय सामाजिकों) के हृदय को काव्यभावना से प्रपूरित करता हुआ वह सारस्वत (सरस्वतीपुत्र) विद्वानों का कल्याण करे।

**चतुर्थकथा**

**निर्मिता काव्यमीमांसा राजशेखरधीमता।**
**वर्णनं विहितं तस्यां काव्यपुरुषजन्मनः[13] ॥50॥**

बुद्धिमान् आचार्य राजशेखर ने काव्यमीमांसा की रचना की थी। उसमें (भी) काव्यपुरुष के जन्म का वर्णन किया गया है।

**पुरा भारतदेशस्य गिरिराजे हिमालये।**
**तेपे तपांसि भूयांसि पुत्रीयन्ती सरस्वती॥51॥**

पहले भारतदेश के पर्वतराज हिमालय में अपने लिए पुत्र की कामना करती हुई सरस्वती बहुत बड़े तपों को करती रही।

**परमेष्ठिप्रसादात् सा सुषुवे काव्यपूरुषम्।**
**सद्यो जातः शिशु र्दिव्यां वाचमाह स्वमातरम्॥52॥**

ब्रह्मा की कृपा से उसने काव्यपुरुष को जन्म दिया। तुरन्त पैदा हुए उस बच्चे ने (अपनी) माता (सरस्वती) से इस दिव्यवाणी को कहा।

**यदेतद् वाङ्मयं विश्वमर्थमूर्त्या विवर्तते।**
**सोऽस्मि काव्यपुमानम्ब पादौ वन्देय तावकौ॥53॥**

हे माता ! जो यह सम्पूर्ण साहित्य अर्थ के रूप में परिवर्तित हुआ है वह मैं (ही) हूँ और मैं तुम्हारे चरणों की वन्दना करता हूँ।

**टिप्पणी**-यह सारा संसार नामरूपात्मक है अर्थात् यहां जितने पदार्थ हैं उनका कोई न कोई नाम होता है। इन्हीं नामों से तत् तत् पदार्थ जाने जाते हैं। काव्यपुरुष का कहना है—संसार के सारे शब्दों और अर्थों में मैं ही विद्यमान हूँ।

**इमां छन्दोमयीं वाणीं श्रुत्वा हर्षमुपागता।**
**श्लाघनीयः सुतोऽसि त्वं वच इदं जगाद सा ॥54॥**

इस छन्दोमयी (श्लोकनिबद्ध) वाणी को सुनकर वह (माता) सरस्वती प्रसन्नता को प्राप्त हुई अर्थात् प्रसन्न हो गई। तुम मेरे प्रशंसा के योग्य पुत्र हो—इस प्रकार के वचन को उसने इस (काव्यपुरुष) से कहा।

**शरीरं तव शब्दार्थौ संस्कृतं ते मुखं स्मृतम्।**
**बाहुस्ते प्राकृतं चोरुस्तेऽपभ्रंशो निगद्यते ॥55॥**

शब्दार्थ तेरा शरीर है और संस्कृत तेरा मुख बताई है । प्राकृत भाषा तेरी भुजा है और अपभ्रंश तेरी जाँघ कही जाती है ।

**पादतुल्यं च पैशाचं मिश्रं तवास्त्युरःस्थलम्।**
**छन्दांसि ते च रोमाणि प्रश्नादिकमिदं च वाक् ॥56॥**

पैशाच भाषा तुम्हारे पैर के समान है और दो या अधिक भाषाओं के मिश्रण से बनी हुई भाषा अथवा गद्यपद्यात्मक मिश्रित भाषा तेरा वक्षःस्थल है। (कविता में प्रयुक्त होने वाले) छन्द तेरे रोम (बाल) हैं और यह प्रश्नोत्तर पहेली आदि (अन्त्याक्षरी आदि वाक्केलि अर्थात् शब्दक्रीडा तुम्हारी) वाणी है।

**उक्तिचणं वचस्तेऽस्ति रसश्चात्मा प्रकीर्तितः।**
**अलङ्कुर्वन्ति सर्वे त्वामनुप्रासोपमादयः ॥57॥**

श्रेष्ठ उक्ति (सूक्ति) तेरा वचन है और रस तेरी आत्मा है और वे सारे अनुप्रास तथा उपमादि अलङ्कार तुझे अलङ्कृत करते हैं।

**त्वमसि पुत्र ओजस्वी प्रसन्नो मधुरः समः।**
**उदारो वसुधां वेत्सि स्वीयमेव कुटुम्बकम्[14] ॥58॥**

हे पुत्र! तुम तेजस्वी, प्रसन्न, मधुर, समवृत्ति (सुख, दुःख में समान) उदार (दानशील और मुक्त हृदय वाले) हो और तुम इस पृथिवी को अपना ही परिवार समझते हो।

**सारस्वतप्रभावेण सञ्जात उशनाःकविः।**
**आश्रित्य छन्दसां वाचं सोऽब्रवीन् मातरं गिराम्।।59।।**

सरस्वतीदेवी के प्रभाव से उशना (राक्षसों के गुरु शुक्राचार्य) कवि बन गये उन्होंने छन्दोबद्ध वाणी का सहारा लेकर वाणियों की देवी सरस्वती माता की स्तुति की।

**टिप्पणी**-उशना अर्थात् शुक्राचार्य को वाल्मीकि जैसा ही महान् कवि माना जाता है। श्रीमद्भगवद्गीता में कहा है-कवीनामुशनाः कविः। श्रीमद्भगवद्गीता 10, 36.

**या दुग्धाऽपि न दुग्धेव कविदोग्धृभिरन्वहम्।**
**हृदि नः सन्निधत्तां सा सूक्तिधेनुः सरस्वती[15] ।।60।।**

कवि रूपी दूध को दुहने वाले दोग्धाओं के द्वारा जो प्रतिदिन दुही जाकर भी न दुही जाने वाली गौ के समान है (जिसका ज्ञान रूपी दूध कभी समाप्त नहीं होता है) वह सूक्तियों की गाय अर्थात् सूक्तियों को बनाने की क्षमता प्रदान करने वाली सरस्वती देवी हमारे हृदय में सान्निध्य को प्राप्त करे (हमारे हृदय में आकर बस जाये)।

**उशनसः प्रसादात्तु जातः सोऽपि महाकविः।**
**व्यरचि नैककाव्यानि चमत्कारयुतानि सः।।61।।**

उन (शुक्राचार्य) की कृपा से वह (काव्यपुरुष) भी महाकवि बन गया और उसने चमत्कार भरे अनेक काव्य बना दिए।

**शिष्यः शिवस्य यो जातः परमेष्ठी पितामहः।**
**तस्यासीत् प्रियतमश्छात्रो विधातुः काव्यपूरुषः।।62।।**

परम गुरु और सबसे बुजुर्ग (सबके दादा) जो ब्रह्मा भगवान् शिव के शिष्य हो गये थे उन ब्रह्मा का वह काव्यपुरुष प्रिय शिष्य था।

साहित्यविद्यया सार्धं विवाहं कृतवानसौ।
तया सह भ्रमन् यातो देशाद् देशान्तरं ततः ॥63॥

साहित्यविद्या के साथ उसने विवाह कर लिया और उसके बाद उसके साथ वह घूमते हुए एक प्रदेश से दूसरे प्रदेश तक चला जाता था।

शिक्षयामासतु र्लोकांस्तत्रत्यान् ललिताः कलाः।
षडङ्गसहितान् वेदान् काव्यानि नाटकानि तौ ॥64॥

उन दोनों ने वहां रहने वाले लोगों को (सङ्गीत आदि) सुन्दर कलाओं, छः अङ्गों सहित वेदों और काव्यों और नाटकों की शिक्षा प्रदान की।

मम्मटाद्यैः कृताऽप्येषा काव्यपुरुषकल्पना।
शरीरमस्य शब्दार्थावात्मा च कथितो रसः[16] ॥65॥

मम्मटादि आचार्यों ने (भी) काव्यपुरुष की यह कल्पना की है। उन्होंने शब्दार्थ को इसका शरीर कहा है और रस को (इसकी) आत्मा बतलाया है।

आकश्मीरात्कुमारीं तु भारतेऽत्राधुनापि सा।
अविच्छिन्ना समायाता तच्छिष्याणां परम्परा ॥66॥

इस समय भी इस भारतवर्ष में कश्मीर से लेकर कन्याकुमारी तक उन दोनों के शिष्यों की बिना किसी व्यवधान के साथ परम्परा चली आ रही है।

सा साहित्यवधू र्धन्या धन्यः काव्यपुमानसौ।
प्रकाशितं जगद् याभ्यां स्वकीयै र्ज्ञानरश्मिभिः ॥67॥

वह साहित्यवधू धन्य है और वह काव्यपुरुष धन्य है जिन्होंने अपनी ज्ञान रूपी किरणों से (सारे) संसार को प्रकाशयुक्त कर दिया है।

इहलोकं परं लोकं द्वावेवेच्छेत् तु यो जनः।
स शृणुयात्कथामेतामाधिव्याधिविनाशिनीम् ॥68॥

इस लोक (पृथिवीलोक) या इस संसार (के उत्तम जीवन) और दूसरे लोक (स्वर्गादिलोक, अगले जन्म के उत्तम जीवन) इन दोनों की जो पुरुष इच्छा करता है वह मानसिक और शारीरिक कष्टों को नष्ट करने वाली इस कथा का श्रवण करे।

यावत्स्थास्यन्ति संसारे चन्द्रदिवाकरावुभौ।
नक्षत्राणि ग्रहाश्चान्ये सरित्सागरपर्वताः ॥69॥

जब तक इस संसार में सूर्य और चन्द्रमा ये दोनों, नक्षत्र (तारे) (और सूर्य चन्द्रमा से अतिरिक्त दूसरे) ग्रह, नदियां, समुद्र एवं पर्वत (विद्यमान रहेंगे)

ज्ञानविज्ञानयोश्चर्चा यावत् सम्पत्स्यते तथा।
काव्यपुंसः कथा तावत्स्थास्यति प्रचरिष्यति ॥70॥

और जब तक इसमें ज्ञानविज्ञान की चर्चा रहेगी (इस) काव्यपुरुष की कथा (भी) तब तक स्थिर होकर रहेगी और इसका प्रचार भी होगा।

काव्यपुरुषवंशानुचरितम्

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः[17] ॥71॥

जो समुद्र (हिन्द महासागर) के उत्तर में है और हिमालय पर्वत के दक्षिण में (स्थित) है वह राष्ट्र भारत नाम का है जहां भरत से उत्पन्न सन्तान (रहती) है अर्थात् जिसमें भारतवासी रहते हैं।

धन्यं तद् भारतं राष्ट्रं स्वर्गापवर्गदायकम्।
धृत्वा पुरुषरूपाणि वसन्ति यत्र देवताः[18] ॥72॥

स्वर्ग और मोक्ष को देने वाला वह भारत राष्ट्र धन्य है जहां मनुष्यों का रूप धारण करके देवता लोग आकर बसे हुए हैं।

अस्मिन्नेव स्थितो योऽयं हिमवान् पर्वतेश्वरः।
भावनानगरी तस्मिंस् तिष्ठति लोकविश्रुता ॥73॥

इसी (भारत देश) में जो यह हिमालय नामक पर्वतराज विद्यमान है उसमें संसारप्रसिद्ध भावना नाम की नगरी अवस्थित है।

काव्यपुरुषः

तत्रावसन् नरः कश्चित् काव्यपुरुषनामकः।
सरस्वतीकृपां लब्ध्वा शास्त्रपारङ्गतोऽभवत् ॥74॥

वहां काव्यपुरुष नामक कोई मनुष्य रहता था। (वह) सरस्वती देवी की कृपा पाकर (अनेक) शास्त्रों में पारङ्गत (प्रवीण) विद्वान् बन गया।

**अनिन्द्यसुन्दरी सौम्या साक्षाद् रतिरिवापरा।**
**युवती साहितीविद्या तस्यासीत् सुभगा वधूः ॥75॥**

अनिन्दनीय अर्थात् बड़ाई करने लायक सौन्दर्य से सम्पन्न, चन्द्रमा के गुणों से युक्त अर्थात् शीतल, सुन्दर और मृदु स्वभाव वाली मानो (मूर्तरूप में) आंखों के आगे दूसरी रति के समान, यौवनसम्पन्न साहितीविद्या (साहित्य-विद्या) नामक उसकी सौभाग्यवती (पतिप्रिया) पत्नी थी।

**दैवयोगादभूतां तौ सन्ततिसुखवञ्चितौ।**
**सन्तानार्थं ततस्ताभ्यां देवानां साधना कृता ॥76॥**

भाग्य (संयोग) वश अर्थात् दौर्भाग्य के कारण वे दोनों (पति पत्नी) सन्तान के सुख से विहीन थे। इस कारण सन्तान की प्राप्ति के लिए उन्होंने देवताओं की पूजा अर्चना की।

**चमत्कारः**

**सङ्कटमोचनस्ताभ्यामाशुतोषः प्रसादितः।**
**तत्प्रसादात् सुतो लब्धो गुणवान् कुलदीपकः ॥77॥**

उन दोनों ने अनिष्ट और आपत्तियों से छुड़ाने वाले और शीघ्र प्रसन्न होने वाले भगवान् (शिव) को प्रसन्न कर लिया। उनकी कृपा से (उन्हें) कुल को प्रकाशित करने वाला (एक) गुणी पुत्र प्राप्त हुआ।

**प्रीतिं सा जननी लेभे मुमुदे जनकस्तथा।**
**सन्ततिं प्राप्य मोदेते दम्पती भाग्यशालिनौ ॥78॥**

(उस पुत्र को पैदा करने वाली वह) माता प्रसन्नता को प्राप्त हुई और वह पिता (भी) प्रसन्न हो गया। सन्तान को प्राप्त करके सौभाग्यशाली पति पत्नी खुश (तो) होते (ही) हैं।

**लालितः पालितश्चासौ चमत्काराभिधः शिशुः।**
**कालेन युवको जातः पूर्णश्चन्द्र इवापरः ॥79॥**

और उस चमत्कार नामक बालक का लालन पालन किया गया। (पूर्णिमा के) पूरे चांद के समान सुन्दर दूसरा (चांद बना) वह बच्चा समय पाकर युवक हो गया।

**नाभवद् दुःखसन्तप्तो नापि स सुखहर्षितः।**
**न चोद्विग्नमना आसीत् तपःपूतो गतस्पृहः ॥80॥**

वह दुःख से सन्तप्त नहीं होता था और सुख से (भी) प्रसन्न नहीं हो जाता था। तपस्या करने से पवित्र और अपनी इच्छाओं को समाप्त कर देने वाला वह चिन्तित मन वाला नहीं था।

**सरस्वती गिरां देवी शुक्राचार्यो बृहस्पतिः।**
**सम्भूय शिक्षयामासुः शिष्यं तं ब्रह्मचारिणम् ॥81॥**

वाणियों की देवी सरस्वती (दानवों के गुरु) शुक्राचार्य और (देवताओं के गुरु) बृहस्पति इन तीनों ने ही मिलकर उस ब्रह्मचारी (चमत्कार) को अपना शिष्य बनाकर पढ़ाया।

**विद्याभ्यासमसौ कृत्वा सञ्जातस्तीव्रबुद्धिमान्।**
**चतुःषष्टिकलाविज्ञो वेदवेदाङ्गपारगः ॥82॥**

वह तीव्र बुद्धि वाला (चमत्कार) विद्याओं का अभ्यास (लगातार अध्ययन) करके चौसठ कलाओं को जानने वाला और चारों वेद और व्याकरणादि छः वेदाङ्गों में पारङ्गत हो गया।

**विद्याविनयसम्पन्नः सर्वभूतहिते रतः।**
**अशोभत स दिव्यैस्तैः सर्वै र्देवोचितै र्गुणैः ॥83॥**

विद्या और नम्रता (अथवा शिक्षा) से समृद्ध और सब प्राणियों के हित में लगा हुआ वह देवों के योग्य अर्थात् देवताओं में पाये जाने वाले उन बहुत सारे अच्छे गुणों से शोभित होता था।

**ज्ञात्वा दुर्बोधशास्त्राणि कृततीर्थसरोऽभवत्।**
**दुर्लभः कृत्यवर्त्मासौ व्याख्याप्य विषयांस्तथा ॥84॥**

बड़ी कठिनाई से समझ में आने वाले शास्त्रों का ज्ञान पाकर वह कृततीर्थ सरोवर बन गया। (चमत्कारपक्ष में कृततीर्थ का अर्थ लोकशास्त्रादि का अभ्यास करने वाला निपुण विद्वान् अध्यापक है और सरोवर के पक्ष में जलावतरण के लिए बनाई गई सीढ़ियों से युक्त सुन्दर और सुगम्य अर्थ है)। (इसके अतिरिक्त) अनेक (शास्त्रीय) विषयों की व्याख्या करके वह विद्वानों के लिए एक दुर्लभ (और विविध विद्याओं में प्रवेश कराने वाला) मार्गदर्शक हो गया।

**टिप्पणी**–महाकवि भारवि ने विषमोऽपि विगाह्यते नयः कृततीर्थः इत्यादि श्लोक (किरातार्जुनीय 2, 3) में कहा है कि साधारण व्यक्ति को भी दुरूह शास्त्रों का ज्ञान प्रकाण्ड विद्वान् की सहायता से प्राप्त हो जाता है। जिस तालाब के किनारे पर सीढ़ियाँ बन जाती हैं उसमें समर्थ और असमर्थ सभी तरह के लोग स्नान कर लेते हैं ठीक उसी तरह उच्च कोटि के आचार्य से साधारण और असाधारण दोनों प्रकार के लोग आसानी से विद्या पा लेते हैं। किन्तु इस प्रकार दूसरों को रास्ता दिखाने वाला विद्वान् हज़ारों में कोई एक ही हुआ करता है।

**देशयात्राप्रसङ्गेन नैकान् देशान् गतो यदा।**
**तदाऽसौ नैकबालानां स्निग्धं सङ्गमवाप्तवान्** ॥85॥

अपने (भारत) देश की यात्रा का अवसर पाने से वह जब अनेक प्रान्तों में गया तब वहाँ उसने अनेक युवती और सुन्दरी कन्याओं का स्नेहिल सम्पर्क प्राप्त किया।

**तत उज्जयिनीपुर्यां विद्यापराभिधायुता।**
**अवन्तीसुन्दरी कन्या तस्य दृष्टिं समागता॥** 86॥

इसके बाद उज्जयिनी नगरी में विद्या इस दूसरी संज्ञा से समन्वित अवन्तीसुन्दरी नाम की कन्या उसकी नज़र में आ गई।

**टिप्पणी**–अवन्तीसुन्दरी का उपनाम विद्या था।

**हावैर्भावैश्च बिब्बोकैः कान्तोचितगुणैस्तु सा।**
**तन्वी श्यामाऽभवत् साक्षात् सृष्टिराद्या प्रजापतेः**[19] ॥87॥

हावों (शारीरिक चेष्टाओं) भावों (प्रेमादिव्यञ्जक विभिन्न मुखमुद्राओं) नाज़ नखरों (गर्व के कारण उपेक्षा भरी चेष्टाओं) तथा (दूसरे दूसरे) नारियों के अनुरूप गुणों के कारण ही तो वह छरहरे शरीर वाली षोडशी सुन्दरी ब्रह्मा (विधाता) की साक्षात् (मूर्तिमती) पहली रचना थी।

**टिप्पणी**-प्राय: चित्रकार की पहली रचना बहुत सुन्दर होती है क्योंकि वह उसे बड़े उत्साह, प्रयत्न, रुचि और सावधानी से बनाता है।

**स्मेरानना प्रगल्भा सा कामकलाविशारदा।**
**तं काममोहितं चक्रे लोलापाङ्गैः सुलोचनैः ॥88॥**

मुस्कराहट भरे मुँह वाली, वाक्पटु और निश्शङ्क, कामकला में चतुर उस (अवन्तीसुन्दरी) ने अपने चञ्चल कटाक्षों वाले सुन्दर नेत्रों से उस चमत्कार (नामक) युवक को काममोहित कर दिया।

**अवर्धत परा प्रीतिस्तयोर्मध्ये शनैः शनैः।**
**ऐक्यमवाप्य जातौ तौ वागर्थाविव संयुतौ ॥89॥**

उन दोनों के बीच में धीरे धीरे बहुत अधिक प्रेम बढ़ता गया और वे दोनों एकरूपता को प्राप्त करके वाणी (शब्द) और अर्थ की भांति (परस्पर) संयुक्त हो गये।

**एकस्यां शुभवेलायां विवाहोऽप्यभवत् तयोः।**
**विशालायां च तौ तस्यां बहुवर्षाणि निन्यतुः ॥90॥**

(और उसके बाद) एक शुभ घड़ी में उन दोनों का विवाह भी हो गया। वे उस विशाला (उज्जयिनी) नगरी में बहुत सारे वर्षों तक रहे।

**भव्यं च भवनं चैकं वासहेतो र्विनिर्मितम्।**
**सर्वसौविध्यसम्पन्नं विद्यामन्दिरनामकम् ॥91॥**

और अपने रहने के लिए उन्होंने सारी सुविधाओं से युक्त विद्यामन्दिर नामक एक सुन्दर भवन बनाया।

कुर्वन्तौ नैककर्माणि लोकसङ्ग्रहहेतवे।
नैकविद्याप्रचारार्थं वसतोऽद्यापि जम्पती ॥92॥

लोगों के कल्याण के लिए अनेक कामों को करते हुए वे पति पत्नी अनेक विद्याओं का प्रचार करने के लिए आज तक भी (वहां) रह रहे हैं।

उचितानुचितौ जातौ भवनस्यास्य रक्षकौ।
रक्षतः स्वामिनौ स्वीयौ दिवानिशमतन्द्रितौ ॥93॥

इस बड़े भवन के उचित और अनुचित नाम के दो प्रहरी बन गये हैं वे अपने दोनों स्वामियों की जागरूक रहकर रात दिन रक्षा करते हैं।

विषामृतौ यथैकत्र तिष्ठतः क्षीरसागरे।
तौ तथा तिष्ठतस्तस्मिन् सेवाभावमुपागतौ ॥94॥

जैसे क्षीरसागर में हालाहल विष और अमृत दोनों एक ही स्थान में रहते हैं वैसे ही उस (भवन) में ये उचित और अनुचित दोनों (ही) एक साथ रहते हैं।

**टिप्पणी**-क्षीरसमुद्र में उत्पन्न हुए चौदह रत्नों में अमृत और हालाहल विष इन दोनों की गणना होती है।

तावुभौ सम्मुखं दृष्ट्वा जायापती प्रसीदतः।
भवन्ति खलु विश्रब्धाः सेवकान् प्राप्य स्वामिनः ॥95॥

उन दोनों को अपने सामने देखकर वे दोनों पति पत्नी प्रसन्न होते हैं। अपने सेवकों को प्राप्त कर निश्चित रूप से मालिक निश्चिन्त हो (ही) जाते हैं।

उचितस्य तु यो भावस्तदौचित्यं निगद्यते।
अनौचित्यपदस्यापि दृष्टा व्युत्पत्तिरीदृशी ॥96॥

उचित का तो जो भाव है वह औचित्य कहलाता (ही) है और अनौचित्यपद की भी ऐसी (ही) व्युत्पत्ति देखी जाती है।

**टिप्पणी**-औचित्य शब्द की व्युत्पत्ति इस प्रकार की जाती है-उचितस्य भावः औचित्यम्, उचित+(भावे) ष्यञ्=औचित्यम्। इसी तरह अनुचितस्य भावः अनौचित्यं अनुचित+(भावे) ष्यञ्=अनौचित्यम्।

औचित्यं चाप्यनौचित्यं भावौ यौ स्तस्तयोर्द्वयोः।
उभौ तावर्पितौ ताभ्यां स्वामिनोस्तुष्टिहेतवे ॥97॥

जो औचित्य एवं अनौचित्य ये दोनों (ही) भाव (उचित और अनुचित नामक) उन (सेवकों के अन्तःकरण) के भीतर विद्यमान हैं उन दोनों को (ही) उन्होंने अपने (चमत्कार और विद्या) दोनों मालिकों को सन्तुष्ट करने के लिए सौंप दिया है।

**टिप्पणी**-ये दोनों सेवक पूर्णसमर्पणभाव से अपने स्वामियों की सेवा कर रहे हैं।

अमृतोपममौचित्यं ह्यनौचित्यं विषात्मकम्।
द्वयोरेवोपयोगित्वं काव्ये नाट्ये विलोक्यते ॥98॥

औचित्य अमृत के सदृश होता है और अनौचित्य विष की प्रकृति (स्वभाव) वाला है इन दोनों की ही उपयोगिता काव्य और नाट्य में देखी जाती है।

**टिप्पणी**—नायक का औचित्य और प्रतिनायक का अनौचित्य ये दोनों काव्योत्कर्षक होते हैं।

परिवारे वसन्त्यस्मिन् चमत्काराङ्गतां गताः।
औचित्यनौचितीयुक्ता रसालङ्काररीतयः ॥99॥

चमत्कार की अङ्गता को प्राप्त अर्थात् चमत्कार के अङ्ग बने हुए और औचित्य और अनौचित्य से युक्त रस, अलङ्कार और रीति ये सारे के सारे इस परिवार में इकट्ठे होकर रहते हैं।

**निर्वृतिः**

अवन्तीसुन्दरीपुत्री कन्या निर्वृतिसंज्ञिका।
साक्षात्सरस्वतीरूपा निवसत्यत्र सद्मनि ॥100॥

और इस (भवन) में आँखों के सामने विद्यमान सरस्वतीस्वरूपिणी अवन्तीसुन्दरी की बेटी निर्वृति नामकी कन्या रहती है।

**प्रशिक्षयति विद्याःसा महतोऽपि गुरून् मुदा।**
**अस्याः शिष्यत्वमापन्ना स्तेऽनुभवन्ति गौरवम्॥101॥**

वह (बड़ी) प्रसन्नता के साथ बड़े (बड़े) गुरुओं को भी विद्याओं को सिखाती है। इसकी शिष्यता को प्राप्त करने वाले वे (छात्रगण और विद्वान्) गौरव की अनुभूति करते हैं।

**दूरादपि समायान्ति शिक्षायै ब्रह्मचारिणः।**
**अज्ञा भवन्ति वै विज्ञा विज्ञा विज्ञतरास्तथा॥102॥**

उससे शिक्षा (लेने) के लिए ब्रह्मचारी छात्रगण (दूर दूर) से भी आते हैं। स्वल्प ज्ञान वाले विद्वान् बन जाते हैं और विद्वान् लोग और अधिक विद्वान् हो जाते हैं।

**ते प्रेम्णाऽत्रावतिष्ठन्ते भावयन्तः परस्परम्।**
**सद्भिः सह सतां सङ्गो जायते पुण्यकर्मभिः॥103॥**

यहाँ वे (सारे लोग) एक दूसरे का ख्याल रखते हुए प्रेमपूर्वक रहते हैं। सज्जनों का सज्जनों के साथ मेल पवित्र कार्यों (के करने) से होता है।

**यथा रामस्य सेनाभी रामसेतु र्विनिर्मितः।**
**ज्ञानसेतुस्तथैवैभिरधुनैको निबध्यते॥104॥**

पहले जैसे राम की सेनाओं ने रामसेतु नामक एक पुल बनाया था वैसे ही यहां इन (परिवार के लोगों) के द्वारा एक ज्ञानसेतु नामक पुल बनाया जा रहा है।

**सेतुं कृत्वा जिता लङ्का तै र्वानरादिभि र्यथा।**
**तथैनं सेतुमारुह्य प्रज्ञा बुधै र्वशीकृता॥105॥**

जैसे वानर, ऋक्षादियों ने पुल बनाकर लङ्का नगरी को जीता था वैसे ही इस (ज्ञानसेतु नामक) पुल पर चढ़कर विद्वानों, कवियों और साहित्यकारों ने प्रज्ञा (बुद्धि) को अपने वश में कर लिया है।

**निर्वृत्या आश्रमे स्थित्वा वीतरागा जितेन्द्रियाः।**
**यतन्ते योगिनः प्राप्तुं विमुक्तिं शान्तिदायिनीम्॥106॥**

निर्वृति के आश्रम में रहकर (सांसारिक विषयों में) अनासक्त और इन्द्रियों को जीतने वाले योगिजन शान्ति देने वाली मुक्ति (निर्वाण) को पाने के लिए प्रयत्न (साधना) करते हैं।

**काव्यपुमांश्चमत्कारो निर्वृतिश्चात्र चर्चिताः।।**
**काव्याधिष्ठातरो देवाः पूज्यन्ते कविभिरिमे॥107॥**

काव्यपुरुष, चमत्कार और निर्वृति की यहाँ चर्चा हुई है। ये काव्य के अधिष्ठातृदेवता कवियों के द्वारा पूजे जाते हैं।

**वंशोऽयं काव्यपुंसो वै रघुवंशोपमो मतः।**
**प्रसिद्धिं परमां यातो याति यास्यति भूतले॥108॥**

उपरिलिखित काव्यपुरुष का यह वंश रघुवंश के सदृश (बहुत ऊंचा) माना गया है। अतीत में पृथ्वी तल पर यह अत्यधिक प्रसिद्धि को प्राप्त हुआ था (वर्तमान में ख्याति को) प्राप्त कर रहा है और यह (भविष्य में भी इसे) प्राप्त करेगा।

**अत्राश्रमे प्रवेशार्थं तथाऽऽवासोपलब्धये।**
**अन्तर्जालेन जानीयाद् विद्यार्थी नियमावलीः॥109॥**

इस आश्रम में प्रवेश (पाने) के लिए और रहने के स्थान को पाने के लिए विद्यार्थी अपने कम्प्यूटर से इण्टर्नैट के द्वारा नियमावलियों को जान लें।

**टिप्पणी**–आजकल सञ्चार के माध्यम बदल गये हैं। पहले किसी प्रकार की सूचना प्राप्त करने के लिए पत्रव्यवहार करना पड़ता था। अब इस सञ्चार माध्यम का प्रयोग बहुत कम हो गया है। इसके स्थान पर यहाँ भी दूरभाष (टेलीफोन) और अन्तर्जाल (इण्टर्नैट) का प्रयोग होने लगा है।

**वंशानुचरितं ह्येतन्नित्यं पठति यो जनः।**
**विद्वान् कविरसौ भूत्वा परां कीर्तिमवाप्नुते॥110॥**

जो पुरुष इस (वंशानुचरित) को सदैव (प्रतिदिन) पढ़ता है वह विद्वान् और कवि होकर अत्यधिक यश को प्राप्त करता है।

**इमां पुण्यां कथां श्रुत्वा सिद्धिं यान्ति मनोरथाः।**
**क्षीयन्ते चापि कर्माणि परब्रह्मापि लभ्यते॥111॥**

इस (वंशानुचरित) की पवित्र कथा को सुनकर मन की इच्छायें सिद्धि को प्राप्त हो जाती हैं और कर्मों अर्थात् कर्मफलों का क्षय हो जाता है तथा परम ब्रह्म परमेश्वर भी पा लिया जाता है।

**टिप्पणी**–ब्रह्मप्राप्ति के बाद किसी प्रकार के कर्मफल को नहीं भोगना पड़ता। यह प्रसिद्धि है–

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

**पायात् स सदाऽपायाच्चमत्कारोऽखिलं जगत्।**
**धर्मार्थकाममोक्षाणां प्रदाता स सदा भवेत्॥112॥**

वह चमत्कार सारे संसार की विनाश से रक्षा करे और (सभी पुरुषों के लिए) वह सदैव धर्म, अर्थ, काम और मोक्ष को देने वाला होता रहे।

**वेदज्ञानसुधां पिबन्ति तु जना मन्त्रार्थविद्वैदिका**
**ज्ञायन्तेऽमलबुद्धिभिस्तु विबुधैः शास्त्राण्यनेकानि च।**
**निर्वृतिस्त्वनुभूयते सहृदयैः काव्येषु या केवलं**
**देवी साऽवतु चिन्मयी भगवती प्रज्ञां च यच्छेत् सदा ॥113॥**

(वेदों के) मन्त्रों के अर्थों को जानने वाले वैदिक विद्वज्जन तो वेदज्ञानरूपी अमृत का पान करते ही हैं। (इसी प्रकार) निर्मल बुद्धि वाले विद्वानों के द्वारा तो अनेक शास्त्रों का ज्ञान जाना जाता ही है। (किन्तु) सहृदय सामाजिकों के द्वारा केवल काव्यों में (ही) जो (चमत्कार की पुत्री) निर्वृति (सुखानुभूति) अनुभव की जाती है चेतनायुक्त (आत्मसाक्षात्कारकारिणी) वह भगवती (निर्वृति) देवी हमें सदा प्रतिभा (काव्यनिर्माणशक्ति) को प्रदान करे।

**टिप्पणी**–यद्यपि वेदमन्त्रों के अर्थों को जानकर वैदिक विद्वान् आनन्दित होते हैं और विभिन्न शास्त्रों का अध्ययन करके वैयाकरण, दार्शनिक और

मीमांसकादि भी हर्षानुभव करते हैं एवं काव्य को पढ़ने वाले तथा नाटक को देखने वाले सामाजिक सुख की अनुभूति प्राप्त करते हैं तथापि इन तीनों के आनन्द की मात्रा में तात्त्विक भेद है। पहले दोनों प्रकार के पण्डितों के हृदय का आनन्द अपने विकास की चरम सीमा तक नहीं पहुंच पाता। इसके विपरीत काव्यानन्द आनन्द की चरमसीमा को प्राप्त कर परमानन्ददशा तक पहुंच जाता है। पुण्यात्मा, काव्यवासना से सुवासित चित्त वाले सहृदय सामाजिक ही इस प्रकार के आनन्द की अनुभूति अपने हृदय में कर पाते हैं–पुण्यवन्तः प्रमिण्वन्ति योगिवद् रससन्ततिम्-योगी की भांति रसजन्यप्रवाह का आनन्द पुण्यशाली सहृदय ही प्राप्त करते हैं दूसरे नहीं। अपवाद के रूप में कोई कोई शास्त्रज्ञ यदि सहृदय होता है तो वह भी चमत्कारानुभूति कर सकता है।

**इति रामप्रतापविरचिते काव्यचमत्कारे द्वितीयोल्लासः समाप्तः।**

इस प्रकार रामप्रताप के द्वारा बनाये गये काव्यचमत्कार में द्वितीय उल्लास समाप्त हुआ।



# पादटिप्पण्यः

1. सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद् दशाङ्गुलम्॥
ऋग्वेदः 10, 90, 1 ; यजुर्वेदः 31, 1
2. ऋग्वेदः 10, 90, 9 ; यजुर्वेदः 31, 1
3. ऋग्वेदः 10, 90, 12 ; यजुर्वेदः 31, 11
4. न कामेन पुनर्मघो भवामि सं चक्षे कं पृश्निमेतामुपाजे।
केन नु त्वमथर्वन् काव्येन केन जातेनासि जातवेदाः॥
सत्यमहं गभीरः काव्येन सत्यं जातेनास्मि जातवेदाः।
न मे दासो नार्यो महित्वा व्रतं मीमाय यदहं धरिष्ये॥
अथर्ववेदः 5, 11, 2-3
5. स पर्यगाच्छुक्रमकायमस्नाविरं शुद्धमपापविद्धम्।
कवि र्मनीषी परिभूः स्वयम्भू र्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः।।
यजुर्वेदः 40, 8
6. न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन्।
त्वं ता विश्वानि भुवनानि वेत्थ स चिन्नु त्वज्जनो मायी बिभाय।।
अथर्ववेदः 5, 11, 4
7. अथर्ववेदः 10, 8, 32
8. (कः) तस्येति-बृहती वेदवाक् तस्याः पति र्बृहस्पतिः वेदाश्च तस्य निःश्वसितभूताः तथा चोक्तं बृहदारण्यके अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदः इत्यादि (बृहदारण्यकम् 2, 4, 10) वागीश्वरविद्यालङ्कारकृता वैदिकसाहित्यसौदामिनी 1, 5 तथा वृत्तिः
9. विलोक्यताम्-महाभारतम् शल्यपर्वणि 40, 3-9
10. विलोक्यताम्-महाभारतम् शल्यपर्वणि 51, 1-52
11. न हायनै र्न पलितै र्न वित्तेन न बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान्॥
महाभारतम् शल्यपर्वणि 51, 49-50
12. सामान्याभिनयो ज्ञेयो वागङ्गसत्त्वजः।
अलङ्काराश्च सत्त्वस्था ज्ञेया भावसमाश्रयाः।

यौवनेऽभ्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजाः॥
आदौ त्रयोऽङ्गजाः प्रोक्ता दश स्वाभाविकास्तथा।
अयत्नजास्तथा सप्त रसभावोपबृंहिताः॥
भावो हावश्च हेला च परस्परसमुत्थिताः।
सत्त्वभेदा भवन्त्येते शरीरे प्रकृतिस्थिताः॥
भरतनाट्यशास्त्रम् 22, 1; 22, 4-6

13. राजशेखरकृता काव्यमीमांसा तृतीयोऽध्यायः काव्यपुरुषोत्पत्तिः

14. (कः) यदेतद्----। तावकौ।।

(खः) अहो श्लाघनीयोऽसि। शब्दार्थौ ते शरीरं, संस्कृतं मुखं, प्राकृतं बाहुः, जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम्। समः प्रसन्नो मधुर उदार ओजस्वी चासि। उक्तिचणं ते वचो रस आत्मा रोमाणि छन्दांसि प्रश्नोत्तरप्रवह्लिकादिकं च वाक्केलिः अनुप्रासोपमादयश्च त्वामलङ्कुर्वन्ति।

राजशेखरकृता काव्यमीमांसा तृतीयोऽध्यायः काव्यपुरुषोत्पत्तिः

15. काव्यमीमांसा तृतीयोऽध्यायः काव्यपुरुषोत्पत्तिः

16. ये रसस्याङ्गिनो धर्मा...... तेऽनुप्रासोपमादयः॥
ते शरीरिणोऽपि उपकारका हारादय इव अलङ्काराः।
काव्यप्रकाशः 8, 66–67 तथा वृत्तिः

17. विष्णुपुराणम् 2, 3, 1

18. गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पदहेतुभूते
भवन्ति भूयः पुरुषाः सुरत्वात्॥
विष्णुपुराणम् 2, 3, 24

19. तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः॥
मेघदूतः उत्तरमेघः 18



# तृतीयोल्लासः

## काव्यकर्ता कविः

### कविप्रशंसा

**नियमरहितां रम्यां पराह्लादप्रदायिनीम्।**
**काव्यसृष्टिं विधत्ते यः स कवि र्जयतेतराम्**[1] ॥1॥

(विधाता के) नियमों से रहित, (केवल) सुन्दर और परमानन्द को प्रदान करने वाली काव्य (रचना) रूपी सृष्टि का जो निर्माण करता है वह कवि (इस संसार में) अत्यधिक विजय को प्राप्त होता है।

**टिप्पणी**—यहां काव्यसृष्टि का शब्दों से वर्णन है और व्यञ्जना से विधाता (ब्रह्मा) की सृष्टि की प्रतीति हो रही है। कविनिर्मित काव्यसृष्टि विधाता के बनाये हुए नियमों से रहित, सुन्दर और परम आह्लाद को देने वाली है। इसके विपरीत विधाता की सृष्टि प्राकृतिक नियमों से जकड़ी हुई है एवं सुन्दर और असुन्दर उभयविधा और सुखदुःखमोहप्रदायिनी है। इस प्रकार यहाँ कवि का प्रभाव विधाता के प्रभाव से बढ़ चढ़कर दिखाया गया है।

**कविः सङ्कल्पमात्रेण प्रतिस्पर्धीव वेधसः।**
**ऊर्णनाभिरिव स्वस्मात् तनोति सृष्टिमद्भुताम्**[2] ॥2॥

ब्रह्मा का प्रतिद्वन्द्वी सा होता हुआ कवि केवल अपने विचार या दृढ़ इच्छा के द्वारा अपने भीतर से (बाहर निकालकर) काव्य रूपी विलक्षण सृष्टि का उसी प्रकार विस्तार करता है जैसे कि मकड़ी अपने भीतर (से स्रवित होने वाले थूक) से ही जाले का निर्माण कर उसे फैला देती है।

**टिप्पणी**—भगवान् ब्रह्मा अपनी इच्छामात्र से इस दृश्यमान जगत् की

रचना करते हैं। कवि भी मानों उनसे प्रतिस्पर्धा करके काव्यजगत् को बनाता है। वह अपनी कल्पना से ही काव्य की सृष्टि कर देता है।

**अपारे काव्यसंसारे कविरेक:प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते[3] ॥3 ॥**

इस अनन्त काव्य रूपी संसार में (उसका निर्माता) कवि ही एकमात्र (अद्वितीय) ऐसा स्रष्टा है कि इसको यह संसार जिस रूप में अच्छा लगता है वह इसको अपनी इच्छानुसार उस रूप में बदल देता है।

**टिप्पणी**—इस लौकिक जगत् में रत्यादिभाव के जो कारण, कार्य और सहकारिकारण दीखते हैं कवि अपने काव्य में उनको अपनी कल्पना से आलम्बनोद्दीपन विभाव, अनुभाव और सञ्चारिभाव का रूप देकर रससृष्टि करके चमत्कार उत्पन्न कर देता है। कवि अचेतन पदार्थों को चेतन और चेतन पदार्थों को अचेतन के समान बना देता है।

**नास्ति जगति तद् वस्तु यन्नो याति रसाङ्गताम्।**
**व्यनक्ति नो चमत्कारं यच्च काव्ये न वर्ण्यते[4] ॥4 ॥**

इस संसार में वह कोई भी वस्तु नहीं है जो रस का अङ्ग (विषय) नहीं बनती है और चमत्कार को नहीं अभिव्यक्त करती है एवं जो काव्य में वर्णित नहीं होती है।

**शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।**
**स एव वीतरागश्चेन् नीरसं व्यक्तमेव तत्[5] ॥5 ॥**

यदि कवि अपने काव्य में शृङ्गाररसप्रिय है तो यह सारा (काव्य) संसार भी शृङ्गाररस से पूर्ण हो जाता है वही यदि विषयों से विमुख होकर वैरागी (विरक्त) हो जाता है तो उसका अभिव्यक्त हुआ वह काव्य (जगत्) भी रसहीन (ऊबाऊ) ही हो जाता है।

**टिप्पणी**—यहां शृङ्गारी पद शृङ्गार, वीर, करुणादि अन्य रसों का उपलक्षण होने से उनका भी ग्राहक है। इसका अभिप्राय यह है कि यदि कवि रसिक होता है तो वह शृङ्गार, करुण, वीरादि सभी रसों को अपने काव्य में समाविष्ट कर देता है यदि वह अरसिक अर्थात् इन सभी रसों से विमुख होता है तो

एवं नवीन वस्तु (काव्य) का निर्माण करने वाले तत्त्व को प्रतिभा कहा जाता है। आचार्य राधावल्लभत्रिपाठी का कहना है कि प्रतिभा के कारण ही कवि को जागरणप्राप्ति अर्थात् काव्यघटना के अनुकूल शब्दार्थ की उपस्थिति होती है। इसी के कारण क़ाव्य में चमत्कार की अभिव्यक्ति होती है।

**व्यज्यतेऽयं चमत्कारः काव्ये प्रतिभया यतः।**
**व्यङ्ग्यव्यञ्जकभावोऽत्र तयो र्मध्ये विलोक्यते ॥90॥**

क्योंकि काव्य में प्रतिभा से इस चमत्कार की अभिव्यक्ति होती है इस कारण इसमें उन दोनों के भीतर व्यङ्ग्यव्यञ्जकभाव दिखाई देता है।

**टिप्पणी**–प्रतिभा व्यञ्जिका है और उससे अभिव्यक्त किया गया चमत्कार व्यङ्ग्य है।

**काव्यहेतुश्चमत्कारः प्रतिभाऽप्यस्य कारणम्।**
**उभयोरेव संयोगः काव्योद्भवे त्वपेक्ष्यते ॥91॥**

काव्य का हेतु चमत्कार है और प्रतिभा भी इस (काव्य) की कारण होती है इन दोनों का ही संयोग काव्य की उत्पत्ति में अपेक्षित हुआ करता है।

**टिप्पणी**–यद्यपि काव्य का प्रमुख कारण प्रतिभा मानी जाती है किन्तु चमत्कार को भी काव्य का हेतु मान लेना चाहिए। इन दोनों के मणिकाञ्चनयोग से विलक्षण काव्य का निर्माण होता है।

**चमत्कारस्यैव काव्यहेतुत्वम्**

**विस्मयोऽसौ चमत्कारश्चमत्कारोऽद्भुतो रसः।**
**चमत्काराच्चमत्कारी चमत्कारः स जायते[57] ॥92॥**

विस्मय नामक स्थायिभाव चमत्कार है और चमत्कार ही अद्भुत रस है इस प्रकार चमत्कार से चमत्कार करने वाला वह चमत्कार पैदा होता है।

**टिप्पणी**–रस में सार चमत्कार हैं और वह सर्वत्र शृङ्गारादि रसों में अनुभव किया जाता है। उस चमत्कार रूप स्थायिभाव के होने पर सर्वत्र शृङ्गारादि रसों में अद्भुत रस होता है। यहाँ चमत्कार के दो अर्थ हैं- विलक्षण

**काव्यसारं चमत्कारं स्वीये काव्ये समाविशन्।**
**प्रदर्श्य प्रतिभां लोकान् सर्वान् कर्षति सत्कविः ॥93 ॥**

काव्य के सारभूत तत्त्व चमत्कार को काव्य में समाविष्ट करता हुआ कवि अपनी प्रतिभा को प्रकट करके सारे मनुष्यों को आकर्षित कर लेता है।

**अतः कविपदप्रेप्सावद्भिस्तु गुरुसेवया।**
**लक्ष्यलक्षणसन्दर्भैः सेवनीया सरस्वती[58] ॥94 ॥**

इसलिए (उपर्युक्त तथ्यों को ध्यान में रखकर) कविपद को प्राप्त करने की इच्छा रखने वाले कवियों के द्वारा लक्षणों और लक्ष्यों (उदाहरणों) के गुम्फनों के द्वारा अर्थात् लक्षण और उनके उदाहरण उपस्थित कर ग्रन्थरचना करके गुरुओं की सेवा करते हुए सरस्वतीदेवी की आराधना करनी चाहिए।

**टिप्पणी**—आचार्य वागीश्वर विद्यालङ्कार का कहना है कि काव्यशास्त्र सम्बन्धी मेरे द्वारा बनाये गये वैदिकसाहित्यसौदामिनी सदृश लक्ष्यलक्षण ग्रन्थों को बनाने की आवश्यकता है क्योंकि इस जैसे ग्रन्थों से काव्यनिर्माण में संलग्न कवियों को मार्गदर्शन मिलता है। अपने गुरुवर के इस कथन में अपनी सहमति मिलाकर प्रस्तुत काव्यचमत्कार के लेखक का भी यह अभिप्राय है कि इस प्रकार के ग्रन्थों के निर्माण की परम्परा आगे भी चलती रहनी चाहिए।

**न विद्यते यद्यपि पूर्ववासना–**
**गुणानुबन्धि प्रतिभानमद्भुतम्।**
**श्रुतेन यत्नेन च वागुपासिता**
**ध्रुवं विधत्ते हृदये चमत्कृतिम्[59] ॥95 ॥**

यद्यपि पूर्व जन्म के संस्कार के (वैचित्र्यकारी) गुणों से सम्बद्ध अद्भुत प्रतिभा भी किसी मनुष्य में न हो तथापि (उस अवस्था में रहते हुए) काव्यादि के (अनुशीलन, पठन) और अभ्यास के द्वारा आराधित सरस्वतीदेवी निश्चित रूप से हृदय में चमत्कार करती है।

**टिप्पणी**—अन्तिम पङ्क्ति में मूलपाठ करोत्येव कमप्यनुग्रहम् है।

सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्[60] ॥96॥

उस आस्वादमय (रसभावजन्य चमत्कार रूप) अर्थतत्त्व को प्रवाहित करने वाली महाकवियों की वाणी (उनके) अलौकिक, प्रतिभासमान प्रतिभाविशेष (अपूर्ववस्तुनिर्माणक्षमता के वैशिष्ट्य) को प्रकट करती है।

नाहं करोमि कवितामिह शारदैव
सात्मानमञ्जयति मत्कवनच्छलेन।
गन्धं तनोति जलजं न निजप्रभावाद्।
विस्फूर्जितं सकलमेव तदर्कलक्ष्म्याः[61] ॥97॥

मैं अपने इस काव्य में स्वयं कविता नहीं लिखता। वस्तुतः स्वयं भगवती शारदा ही मेरी कविता के बहाने अपने को इस संसार में प्रकाशित करती हैं। कमलपुष्प अपने व्यक्तिगत प्रभाव से परिमल नहीं बिखेरता है वह सब तो बस सूर्यलक्ष्मी (सूर्य की किरणों के प्रकाश) की चमक का ही फल है।

**टिप्पणी**—अभिराजराजेन्द्र मिश्र ने अपने अरण्यानी (काव्यसङ्ग्रह) में यह श्लोक लिखा है। इसमें कविता सरस्वती आदि दैवी शक्तियों की प्रेरणा से ही स्फुरित होती है इस तथ्य का प्रतिपादन किया गया है।

**इति रामप्रतापविरचिते काव्यचमत्कारे चतुर्थोल्लासः समाप्तः।**

इस प्रकार रामप्रतापविरचित काव्यचमत्कार में चतुर्थोल्लास समाप्त हुआ।

☒☒☒

# पादटिप्पण्यः

1. प्रयोजनं च सर्वत्र प्रवृत्त्यङ्गम्। यदुक्तम्–
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।
काव्यप्रकाश: 1, 2 काव्यादर्शटीका

2. साहित्यदर्पणम् 1, 2 रुचिराटीका

3. लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये।
काव्यस्यायमलङ्कार: कोऽप्यपूर्वो विधीयते॥
कोऽपि अलौकिक: सातिशय: सोऽपि किमर्थमित्याह– लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये असामान्याह्लादविधायि-विचित्रभावसम्पत्तये। यद्यपि सन्ति शतश: काव्यालङ्कारास्तथापि न कुतश्चिदप्येवंविधवैचित्र्यसिद्धि:। ......तदयमर्थ:-ग्रन्थस्यालङ्कार इत्यभिधानम्, उपमादिप्रमेयजातमभिधेयम्, उक्तरूप-वैचित्र्यसिद्धि: प्रयोजनमिति।

वक्रोक्तिजीवितम् 1, 2 तथा वृत्ति:

4. (क:) अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति।
देवस्य पश्य काव्यं न ममार न जीर्यति॥
अथर्ववेद: 10, 8, 32

(ख:) धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥
साहित्यदर्पण: 1, 1 वृत्ति:

(ग) अवाप्तुं सच्चिदानन्दं सद्य एव यदीच्छसि।
पश्य देवस्य काव्यं यन्न ममार न जीर्यति।
वागीश्वरविद्यालङ्कारकृता वैदिकसाहित्यसौदामिनी 1, 2

5. काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्य: परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥
प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्य:, सुहृत्सम्मितार्थतात्पर्यवत्

पुराणादीतिहासेभ्यश्च, शब्दार्थयो र्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणं कविकर्म तत् कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम्।

काव्यप्रकाशः 1, 2 तथा वृत्तिः

6. काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥
काव्यप्रकाशः 1, 2

7. अभिराजराजेन्द्रमिश्रकृतम् अभिराजयशोभूषणम् 1, 28

8. नृणां विधौ निषेधे च शिक्षा काव्यप्रयोजनम्।
शिक्षा च सचमत्कारं बोधिता स्थिरतां भजेत्॥
चमत्कारचन्द्रिका प्रथमो विलासः पृ० 2

9. मुक्तिस्तस्य प्रयोजनम्। मुक्तिश्चावरणभङ्गः। आवरणं च सङ्कुचितप्रमातृत्वम्।

काव्यस्य श्रवणेन..... सहृदयस्य चैतन्यमानन्त्यमुपयाति। अयमानन्त्यानुभव एव मुक्तिः।

राधावल्लभत्रिपाठिकृतम् अभिनवकाव्यालङ्कारसूत्रम् 1, 2, 1; 1, 2, 4; 1, 2, 5; 1, 2, 7 वृत्तिः

10. ये स्वान्तःसुखहेतवे भगवतः सेवार्पणायैव वा
सम्मानाय धनाय कोमलधियां प्रेम्णा प्रबोधाय वा।
सद्यो निर्वृतिदां हृदि सुमनसां ग्रथ्नन्ति काव्यस्रजं
वन्द्यास्ते कवयो न कस्य भुवने प्रीत्याभिनन्द्या न वा॥
वैदिकसाहित्यसौदामिनी 1, 6

11. (कः) चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते॥
वक्रोक्तिजीवितम् 1, 5

(खः) सकलप्रयोजनमौलिभूतं... विगलितवेद्यान्तरमानन्दं...विलक्षणं यत् काव्यं लोकोत्तरवर्णनानिपुणं कविकर्म तत्...इत्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति।
काव्यप्रकाशः 1, 2 वृत्तिः

12. तेन ब्रूमः.......... प्रीतये तत्स्वरूपम्॥ ध्वन्यालोकः 1, 1

**टिप्पणी**–सहृदयमनः प्रीतिरेव काव्यस्य मुख्यतमं प्रयोजनमित्यत्र प्रतिपादितम्। यतो हि–

ध्वन्यालोके आनन्दवर्धनेन प्रीतिशब्दस्य पर्यायः आनन्दः प्रदर्शितः– आनन्दो मनसि लभतां प्रतिष्ठाम् (ध्वन्यालोकः 1, 1 वृत्तिः)। ध्वन्यालोकलोचनेऽपि निर्वृतिशब्दस्य पर्यायः चमत्कार इति प्रदर्शितः (निर्वृत्यात्मा चमत्कारः)। ध्वन्यालोकः 1, 1 वृत्तिभागे लोचनटीका

13. काव्यप्रकाशः 1, 2 सोमेश्वरकृता काव्यादर्शसङ्केतटीका

14. भामहकृतः काव्यालङ्कारः 5, 3

15. वक्रोक्तिजीवितम् 1, 5

16. न हि रसाद् ऋते कश्चिदर्थः प्रवर्तते। हि यस्मात् रसं विना विभावादिरर्थो बुद्धौ व्याख्येयतया न प्रवर्तते। नाट्यशास्त्रम् 6, 32 तथा अभिनवभारतीटीका

17. (कः) रसे सारश्चमत्कारः सर्वत्राऽप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥
तस्माददद्भुतमेवाह कृती नारायणो रसम्।
साहित्यदर्पणम् 3, 3 वृत्तिः

(खः) रसे सारश्चमत्कारो यं विना न रसो रसः।
तच्चमत्कारसारत्वे सर्वत्रैवाद्भुतो रसः॥
अलङ्कारकौस्तुभः 5, 22 वृत्तिः

18. व्यञ्जनौषधिसंयोगो यथा ..... एवं भावा रसाश्चैव भावयन्ति परस्परम्॥ नाट्यशास्त्रम् 6, 38

19. यथा हि नानाव्यञ्जनसंस्कृतमन्नं ... स्वादयन्ति सुमनसः पुरुषा..... तथा नानाभावाभिनयव्यञ्जितान् ... स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः।

नाट्यशास्त्रम् 6, 32 वृत्तिः

**टिप्पणी**–स्थायिभावनास्वादयन्तः सहृदयाः पूर्वं रसाननुभवन्ति अनन्तरं च ते हर्षादिरूपं चमत्कारमास्वादयन्ति।

20. तेनालौकिकचमत्कारात्मा रसास्वादः स्मृत्यनुमानलौकिकस्वसंवेदन-विलक्षण एव। भरतनाट्यशास्त्रम् 6, 32 वृत्तिभागे अभिनवभारतीटीका

**टिप्पणी**–अत्र रसास्वाद एव चमत्कार इति प्रतिपादितम्।

21. (कः) काव्यस्यात्मा ध्वनिरिति बुधै र्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्॥
ध्वन्यालोकः 1,1

अथ प्राधान्येनाभिधेयस्वरूपमभिदधदप्रधानतया प्रयोजनप्रयोजनम् तत्सम्बद्धं प्रयोजनं च सामर्थ्यात् प्रकटयन्नादिवाक्यमाह–काव्यस्यात्मेति। ध्वन्यालोकः 1, 1 लोचनटीका

**टिप्पणी**– अत्र लोचनकारेण अभिनवगुप्तेन इदं प्रतिपादितम्-प्रारम्भपद्येऽस्मिन् कारिकाकारः स्वचिकीर्षितग्रन्थस्य सर्वप्रथममभिधेयं (विषयम्) ध्वनिस्वरूपं निरूपयति। अस्य स्वरूपनिरूपणस्य प्रयोजनं तु ध्वनिज्ञापनमस्ति। परन्तु अस्य प्रयोजनस्यापि अपरं प्रयोजनं सहृदयानां मनस्तोषो विद्यते।

सहृदयमनःप्रीतये तत्स्वरूपम्........ सहृदयानां मनसि आनन्दो लभतां प्रतिष्ठामिति प्रकाश्यते (ध्वन्यालोकः 1, 1 तथा वृत्तिः) इति ब्रुवाणः आनन्दवर्धनाचार्यः प्रीतिशब्दस्य आनन्दार्थं द्योतयति। अत्रैव लोचनकारोऽभिनवगुप्तः आनन्दो निर्वृत्यात्मा चमत्कारः (ध्वन्यालोकः 1, 1 वृत्तिभागे लोचनटीका) इति कथयति। एवमत्र प्रीतिशब्दस्य पर्याय आनन्दः आनन्दस्य च पर्यायश्चमत्कारो जातः। ध्वन्यालोककारस्य आनन्दवर्धनस्य ध्वन्यालोकनिर्माणे

प्रथमं प्रयोजनं ध्वनिस्थापनं विद्यते द्वितीयप्रयोजनं च चमत्कारनिरूपणम्। एवं ध्वनिचमत्कारनिरूपणे द्वे एव तस्य प्रयोजने इति निष्कर्षरूपेण कथयितुं शक्यते। ध्वनिप्रतिपादनं प्रयोजनं चमत्कारनिरूपणं च मुख्यतमं प्रयोजनमिति तात्पर्यम्।

22. एवं ग्रन्थकृतः कवेः श्रोतुश्च मुख्यं प्रयोजनमुक्तम्।
ध्वन्यालोकः 1, 1 वृत्तिः लोचनटीका।

23. आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः॥
अभिज्ञानशाकुन्तलम् 1, 2

24. (कः) शक्ति र्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे॥
इति त्रयः समुदिता न तु व्यस्तास्तस्य काव्यस्योद्भवे
निर्माणे समुल्लासे च हेतु र्न तु हेतवः।
काव्यप्रकाशः 1, 3 तथा वृत्तिः

(खः) काव्यस्य करणे हेतुश्चैतेऽर्थाः खलु सङ्गताः।
एते सम्मिलिताः काव्यहेतु र्व्यस्ता न कर्हिचित्॥
रसदीर्घिका पृ. 56

(घः) स्वयं कृपाकटाक्षेण दृष्टः प्रतिभया न यः।
सोऽपि सिध्यति यत्नेन शिक्षाभ्यासबलेन च॥
वागीश्वरविद्यालङ्कारकृता वैदिकसाहित्यसौदामिनी 1, 7।

25. (कः) अस्य कारणमाह–काव्यस्य उद्भवे निर्माणे समुल्लासे चेति।
इदमत्राकूतम्–शक्त्यादित्रयं काव्यकारणमिव काव्ये चमत्कारोऽपि हेतुः।
काव्यप्रकाशः 1, 3 रविभट्टाचार्यकृता मधुमतीटीका

(खः) चमत्कारप्रयोजकसादृश्यवर्णनमुपमा। विश्वेश्वरपण्डितकृते अलङ्कारप्रदीपे प्रथमसूत्रम्

26. (कः) चमत्कारं करोत्येव ह्यौचित्यरचितं वचः।
... नवनवोन्मेषप्रज्ञाचातुर्यवचनमौचित्यचमत्कारं करोति।
यदाह भट्टतौतः–

प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।
औचित्यविचारचर्चा 35 कारिका तथा वृत्तिः

(खः) न हि चमत्कारविरहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम्। कविकण्ठाभरणम् 3, 1 वृत्तिः

27. (कः) प्रतिभैव च कवीनां काव्यकरणकारणं व्युत्पत्त्यभ्यासौ तस्या एव संस्कारकौ न तु काव्यहेतू।
अलङ्कारतिलकम् पृ० 2

(खः) तस्य च कारणं कविगता केवला प्रतिभा। सा च काव्यघटनानुकूलशब्दार्थोपस्थितिः। रसगङ्गाधरः प्रथमाननम् काव्यलक्षणम्

28. (कः) तस्याश्च हेतुः क्वचिद् देवतामहापुरुषजन्यमदृष्टम्। क्वचिच्च विलक्षणव्युत्पत्तिकाव्यकरणाभ्यासौ। रसगङ्गाधरः प्रथमाननम् काव्यलक्षणम्।

(खः) जागरिता प्रतिभा तस्य कारणम् जागरिता स्पन्दशीला।
अभिनवकाव्यालङ्कारसूत्रम् 1, 3, 1 तथा वृत्तिः।

29. चन्द्रालोकः 1, 6

30. (कः) कारणं प्रतिभा .........। काव्याय प्रतिभैव सा॥
रेवाप्रसादद्विवेदिकृता काव्यालङ्कारकारिका 11, 19 कारिके

(खः) सर्वेषामपि भावानां कलानां प्रतिभाऽऽत्मता॥
रेवाप्रसादद्विवेदिकृतं नाट्यानुशासनम् (रसभोगः, पञ्चमोन्मेषः)।

31. काव्यप्रकाशः 1, 3 सम्प्रदायप्रकाशिनीटीका

32. कवित्वबीजभूतः कवित्वे बीजभूतो निमित्तभूतः संस्कारविशेषो भावनाख्यः प्रतिभानामा प्रणिधानसहकृते चेतसि यो झटित्युद्बुध्यतेऽक्लिष्टपदगोचरः संस्कारः स प्रतिभा।

तदुक्तम्–

मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।

अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः॥
काव्यप्रकाशः 1, 3 विवरणटीका

33. ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात्।
न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः॥
सत्स्वपि पुरातनप्रबन्धेषु यदि स्यात् प्रतिभागुणः। तस्मिंस्त्वसति न किञ्चिदेव कवे र्वस्त्वस्ति।
ध्वन्यालोकः 4, 6 तथा वृत्तिः

34. अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
किन्त्वशक्तिकृतस्तस्य स झटित्यवभासते॥
ध्वन्यालोकः 3, 6 वृत्तिः

35. अग्निपुराणम् 337, 7

36. भामहकृतकाव्यालङ्कारः 1, 5

37. (कः) प्रतिभाभरणं काव्यमुचितं शोभते कवेः।
निर्मलं सुगुणस्येव कुलं भूतिविभूषितम्॥
नवनवोन्मेषप्रज्ञाचातुर्यचारुवचनमौचित्यचमत्कारं करोति।
औचित्यविचारचर्चा 35 तथा वृत्तिः

(खः) अभिराजराजेन्द्रमिश्रकृतम् अभिराजयशोभूषणम् 1, 33

38. वागीश्वरविद्यालङ्कारकृता वैदिकसाहित्यसौदामिनी 1, 44

39. प्रज्ञा गृह्णाति सामग्रीं रूपं यच्छति कल्पना।
आत्मभूतं तु काव्यस्य रसं सिञ्चति भावना॥

कविः प्रज्ञया जगतो वर्ण्यवस्तु सङ्गृह्णाति....रससिक्तं विधीयते।
वैदिकसाहित्यसौदामिनी 1, 45 तथा वृत्तिः

40. ज्ञानं प्रज्ञा चमत्कारमुल्लासं चापि कल्पना।
रसानुभूतिं गम्भीरां भावना कुरुते हृदि॥
वैदिकसाहित्यसौदामिनी 1, 46

41. सैव 1, 67

42. (क:) सैव 1, 48

(ख:) सूक्ष्मं निरीक्षणं व्यापि सुस्पष्टा स्थायिनी स्मृति:।
विभिन्नेषु परिच्छेद: साम्यवैषम्यदर्शनम्॥
वर्गीकरणसामर्थ्यं प्रकीर्णस्यापि वस्तुन:।
आवश्यकस्य चयनं त्यागोऽनावश्यकस्य च॥
परिच्छेदो विवेक:।

वैदिकसाहित्यसौदामिनी 1, 49-50

43. वैदिकसाहित्यसौदामिनी 1, 57

44. प्रतिकूलाऽनुकूला वा...... परिवेशादिदोहदै:॥

धर्मवीरा: स्वधर्मार्थं सत्यार्थं सत्यवादिन:।
देशभक्ताश्च देशार्थं पीडितार्थं च सज्जना:॥
सुखं धनं स्वसर्वस्वं बन्धून् प्राणानपि प्रियान्।
यत् तृणाय न मन्यन्ते तत्सर्वं भावनावशात्॥

वैदिकसाहित्यसौदामिनी 1, 60-61 तथा 62-63

45. कलमव्यक्तमधुरं..........कलोदिता।

कलमव्यक्तमधुरम् इति कोष:। कला हि स्वसम्पर्केण सकलमपि कमनीयं करोतीति हेतो: सा कलाकुशलै: कलानाम्नाऽभिधीयते।

वैदिकसाहित्यसौदामिनी 1, 26 तथा वृत्ति:।

46. सैव 1, 31

47. सैव 1, 23-24

48. सैव 1, 32

49. सैव 1, 71

50. तस्य च कारणं कविगता केवला प्रतिभा।...तस्याश्च हेतुः क्वचिद् देवतामहापुरुषादिप्रसादजन्यमदृष्टम्। क्वचिच्च विलक्षणव्युत्पत्ति-काव्यकरणाभ्यासौ।

रसगङ्गाधरः प्रथमाननम् काव्यलक्षणप्रकरणम्

**टिप्पणी**—अत्र काव्यस्य कारणं प्रतिभा प्रोक्ता प्रतिभाया वर्तते कारणमदृष्टं व्युत्पत्तिरभ्यासश्च। एवं प्रतिभया सार्धं काव्यस्य साक्षात् सम्बन्धः अदृष्टादिभिश्च सह तस्य परोक्षसम्बन्धो दृश्यते।

51. वैदिकसाहित्यसौदामिनी 1, 68

52. (कः) दृग्वन्तोऽपि न शक्नुवन्ति बहवो द्रष्टुं जगच्चारुतां
दृष्ट्वाऽन्येऽनुभवन्ति नैव हृदये तस्याः प्रभावं परम्।
धन्यास्ते कवयो भवन्ति खलु ये तद्वर्णनाय क्षमाः
कल्पन्ते मधुमक्षिकेव मधुपाः किं वा मधूत्पत्तये॥
सैव 1, 69

(खः) ये तु निपीतं कुसुमरसमिव मधुकराः उपात्तां स्वानुभूतिं रुचिरगिरि पुनरुद्वमन्ति त उत्पादका एव कवयः।

सैव 1, 68 वृत्तिः

53. सैव 1, 70

54. काव्यादर्शः 1, 103

55. (कः) विलक्षणं यत् काव्यं लोकोत्तरवर्णनानिपुणं कविकर्म तत्।
काव्यप्रकाशः 1, 2 वृत्तिः

(खः) लोकोत्तरेति-तथोक्तं काव्यकौतुके-प्रज्ञा नवोन्मेष...निपुणं कविः॥ तस्य कर्म स्मृतमिति। काव्यप्रकाशः 1, 2 रुय्यककृता सङ्केतटीका

(गः) लोकोत्तरचमत्कारप्रकर्षानुगुणा वर्णना। काव्यप्रकाशः 1, 2 दीपिकाटीका

56. (क:) प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा। ध्वन्यालोक: 1,6 लोचनटीका

(ख:) जागरिता प्रतिभा तस्य कारणम्।

तस्य काव्यस्य कारणं जागरिता प्रतिभा।

जागरिता स्पन्दशीला। ........काव्यघटनानुकूलशब्दार्थोपस्थिति र्जागरणम्।

राधावल्लभत्रिपाठिकृतम् अभिनवकाव्यालङ्कारसूत्रम् 1, 3, 1 तथा वृत्ति:

57. (क:) रसे सारश्चमत्कार: सर्वत्राद्भुतो रस:।। साहित्यदर्पण: 3, 3 वृत्ति:।

(ख:) चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्याय:। यद्वा अपरपर्यायोऽभिन्न: तत्प्राणत्वं चमत्कारसारत्वम्। सार: स्थिरांश: सर्वत्र शृङ्गारादौ चमत्कारसारत्वे चमत्कारस्थायिभावत्वे तस्मात् सर्वत्राद्भुतरससम्भवात्। साहित्यदर्पण: 3, 3 रामचरणतर्कवागीशकृतविवृतिटीका

(ग:) तस्मिन् (चमत्कारे) सति शृङ्गारादिरसकाव्येष्वपि अद्भुतो रस: सम्भवति। तत्रैव 3, 3 महेश्वरभट्टाचार्यकृतविज्ञप्रिया टीका।

(घ:) नारायणदासैरप्युक्तमिति-चमत्कार एव सर्वरसप्राणभूत:। तस्य च रत्याद्यंशशबलत्वेन यथायथं शृङ्गारादिव्यपदेश: तदभावादद्भुतव्यपदेश इति।

साहित्यदर्पण: 3, 3 अनन्तदासकृतलोचनटीका

58. अत: कविपद....सेवनीया सरस्वती॥

तत्कृते च लक्षणग्रन्थानामेतादृशानामपेक्षा भवतीति तदर्थमयमस्माकमारम्भ:।

वैदिकसाहित्यसौदामिनी 1, 72 तथा वृत्ति:

59. काव्यादर्श: 1, 104

60. ध्वन्यालोक: 1, 6

61. अभिराजराजेन्द्रमिश्रकृतम् अभिराजयशोभूषणम् 1, 33 वृत्ति:



# पञ्चमोल्लासः

## काव्यलक्षणानि

**काव्यस्य सामान्यलक्षणम्**

**काव्यं सम्यक् परिज्ञातुं वैशिष्ट्यमपि वीक्षितुम्।**
**क्रियते विस्तृतं व्यापि सामान्यमस्य लक्षणम्[1] ॥1॥**

अव यहाँ काव्य के सामान्यलक्षण पर विचार किया जाता है। काव्य की अच्छी तरह जाँच पड़ताल करने और (इसकी) विशेषता को भी देखने के लिए इसका विस्तृत एवं व्यापक सामान्यलक्षण (प्रस्तुत) किया जा रहा है।

**टिप्पणी**—किसी व्यक्ति या पदार्थ का पूरा परिचय देने तथा उसकी सारी विशेषताओं को बताने के लिए जो विस्तृत, व्यापक एवं स्पष्ट लक्षण बताया जाता है वह सामान्यलक्षण होता है। उससे भिन्न विशेषलक्षण है। उसमें- अन्यूनातिरिक्तविषयत्वं लक्षणत्वम् – जो अपने लक्ष्य (उदाहरण) पर पूरा घटे और उसमें प्रयुक्त पद न कम हों और न अधिक हों- इस नियम का पालन किया जाता है। उदाहरणार्थ गच्छतीति गौः यह गोव्यक्ति का सामान्यलक्षण है। यह गौ पर तो घटता ही है किन्तु (लक्ष्येतर) गवेतर पृथ्वी, अश्व इत्यादि प्राणियों को भी बताता है। सास्नादिमत्त्वं गोत्वम् – सास्ना (गलकम्बल) आदि से युक्त होना ही गोत्व है यह विशेषलक्षण है जो गोव्यक्ति पर पूर्णतया चरितार्थ होता है।

**सुप्रयुक्तैः सुविज्ञातैः सन्निधियोग्यतायुतैः।**
**साकाङ्क्षैश्च पदै र्युक्तं वाक्यं स्यादर्थबोधकम्[2] ॥2॥**

(ठीक अवसर और ठीक स्थान पर) अच्छी तरह प्रयुक्त, भली भाँति जाने

गये (देशकृत और कालकृत) सामीप्य और योग्यता से युक्त और परस्परसाकाङ्क्ष अर्थात् एक दूसरे की अपेक्षा रखने वाले पदों से युक्त वाक्य ही अर्थबोधक होता है (दूसरे प्रकार का नहीं)।

**टिप्पणी**—वाक्य में प्रयुक्त पदों में निम्नलिखित विशेषतायें होनी चाहिएं-

**1. सुप्रयुक्त और 2. सुविज्ञात**—ओम् इत्यादि पदों का प्रयोग मन्त्र के आदि में अर्थ जानते हुए किया जाता है। अव् रक्षणे धातु से ओम् पद की निष्पत्ति हुई है। यह ओम् परमात्मा सबका रक्षक होता है। इस पद का अर्थ भी सुविज्ञात है।

**3. सन्निधि**—इसका अर्थ है सामीप्य। इसी का दूसरा पर्याय आसत्ति है। आसत्ति बुंद्ध्यविच्छेदः-प्रकरणोपयोगी पदार्थों के साथ बुद्धि का अविच्छेद अर्थात् अव्यवधान आसत्ति कहा जाता है। जिन पदों का वाक्य में प्रयोग होता है उनके बीच में व्यवधान नहीं होना चाहिए। आज उच्चारित देवदत्तः पद का सम्बन्ध अगले दिन उच्चार्यमाण गच्छति पद के साथ नहीं हो सकता।

**4. योग्यता**—एक पदार्थ का दूसरे पदार्थ के साथ सम्बन्ध के करने में बाधा का न आना योग्यता कहलाता है। जो पदार्थ जिस पदार्थ के साथ सम्बन्ध करने में बाधित न हो उसे योग्य कहते हैं। यदि योग्यता के बिना पदसमुदाय को वाक्य माना जायेगा तो वह्निना सिञ्चति यह भी वाक्य हो जायेगा। योग्यता को कारण मानने से ही इसमें वाक्य का लक्षण नहीं जाता। क्योंकि सेचनक्रिया में अग्नि की साधनता बाधित है। अग्नि जलाने का साधन है सींचने का नहीं है।

**5. आकाङ्क्षा**—किसी ज्ञान की समाप्ति या पूर्ति का न होना आकांक्षा है। वाक्यार्थ की पूर्ति के लिए किसी अन्य पदार्थ की जिज्ञासा बनी रहती है। जैसे देवदत्तो ग्रामं इतना कहने के बाद गच्छति क्रिया की आकांक्षा है। इसके बिना वाक्यार्थज्ञान का पर्यवसान नहीं होता।

जिस वाक्य में उपर्युक्त विशेषतायें होती हैं वही अर्थबोधक होता है।

**वाक्यमपि द्विधा दृष्टं प्राकृतं प्रातिभं तथा।**
**गामानयादिकं पूर्वं मुखपद्मादिकं परम्॥3॥**

वाक्य भी दो प्रकार का देखा गया है (पहले प्रकार का) प्राकृत और (दूसरा) प्रतिभा से उत्पन्न प्रातिभवाक्य है। गामानय आदि पूर्व वाक्य प्राकृतवाक्य हैं और मुखपद्म (मुखकमल) आदि उत्तर वाक्य दूसरे प्रकार के हैं।

**टिप्पणी**–देवदत्त गामानय आदि साधारण वाक्य में चमत्कार का अभाव है तथा मुखपद्म पश्य जैसे वाक्य में चमत्कार का अनुभव किया जाता है।

**शब्दार्थरसमुख्यत्वं भिन्नाः शिक्षणरीतयः।**
**वेदपुराणकाव्यानां वाक्येषु प्रायशो मताः।[3] ॥4॥**

शब्दप्रधानता, अर्थप्रधानता, रसप्रधानता एवं विभिन्न शिक्षणशैलियाँ (क्रमशः) वेदों, पुराणों एवं काव्यों (और नाटकादियों) के वाक्यों में प्रायः मानी गई हैं अर्थात् इनके वाक्यों के भीतर रहा करती हैं।

**टिप्पणी**–आचार्य मम्मट ने वेदादिशास्त्रों को शब्दप्रधान, पुराणेतिहासादि को अर्थप्रधान और कालिदासादि के काव्य, नाटकादि को रसप्रधान बताया है। इसी प्रकार प्रभुसम्मित, सुहृत्सम्मित और कान्तासम्मित इन त्रिविध उपदेशशैलियों का उल्लेख किया है। तीसरी कान्तासम्मितशैली काव्यों और नाटकों में देखने को मिलती है और यह रसप्रधान होती है। काव्यप्रकाश 1, 2 तथा वृत्ति। कहीं कहीं वेदों और पुराणों की शैलीं भी कान्तासम्मित और रसप्रधान होती है।

**व्यङ्ग्यप्रधानकाव्यानां वाक्येषु पदगौणता।**
**सदुक्तीनां च वैचित्र्यं कथानामपि कौतुकम्॥5॥**

व्यङ्ग्यार्थप्रधान काव्यों के वाक्यों में पदों की गौणता (दिखाई देती) है। उनमें उत्तम उक्तियों की विचित्रता और कथाओं का कुतूहल भी पाया जाता है।

**निर्दोषं गुणसम्पृक्तं रीतिवृत्तिसमन्वितम्।**
**ध्वनिवक्रोक्तियुक्तं यद् रसलक्षणमण्डितम्॥6॥**

जो दोषरहित, गुणों से भरपूर, रीति (विशेष प्रकार की पदसङ्घटना) और (नाट्यगत भारती, कैशिकी आदि विशिष्ट कथनशैली रूप) वृत्तियों (तथा काव्यगत एवं नाट्यगत अभिधा, लक्षणा, व्यञ्जना एवं तात्पर्य रूप) शब्दशक्तियों

से सम्पृक्त और ध्वनि और वक्रोक्ति से संयुक्त तथा रस एवं लक्षणों से सुशोभित होता है। (वह वाक्य काव्य है)

**टिप्पणी**–उत्तम काव्य में दोषाभाव, गुणाधान और रीतिवृत्तियों का समावेश होता है। भारती, कैशिकी आदि वृत्तियां नाट्यशास्त्र में वर्णित हैं और अभिधादिवृत्तियों का विवेचन काव्यशास्त्र में किया गया है। शृङ्गारादि रस हैं। अतिशयोक्ति रूप वक्रोक्ति सभी अलङ्कारों में पाई जाने के कारण सामान्य अलङ्कार है। चमत्कारिणी उक्ति को भी वक्रोक्ति कहा जाता है। उपमादि विशेष अलङ्कार हैं। इस प्रकार काव्य में वक्रोक्ति जैसे सामान्य अलङ्कार और उपमा आदि विशेष अलङ्कार होते हैं और भरतमुनि प्रतिपादित रसतत्त्व एवं लक्षणतत्त्व ये दोनों भी काव्य के घटकतत्त्व हैं।

**अन्योऽन्यं भावयद्भिस्तैः कुतूहलविवर्धकैः।**
**अलङ्कारचमत्कारै र्भावैश्चापि युतं हि यत्[4] ॥7॥**

और विस्मय और उत्सुकता को बढ़ाने वाले, एक दूसरे के लिए अनुकूलता एवं अपेक्षा रखने वाले उन अलङ्कारों, चमत्कारों तथा भावों से भी जो युक्त हुआ करता है। (वह वाक्य काव्य है)।

**टिप्पणी**–अलङ्कार और चमत्कार में कार्यकारणभावसम्बन्ध माना जाता है। चमत्कृतिजनकत्वमलङ्कारत्वम्-चमत्कारजनकत्व ही अलङ्कारत्व है। काव्य के इन दोनों तत्वों में परस्पर आनुकूल्य रहता ही है।

**यद्यप्येषां समष्ट्यैव प्राप्नोति यत् परां श्रियम्।**
**तथाप्याकृष्यते यस्मिन् चित्तमेकेन केनचित्[5] ॥8॥**

यद्यपि इन (रस, भावादियों) की समष्टि से ही जो (काव्यवाक्य) उत्तम शोभा को प्राप्त करता है फिर भी जिसके भीतर (कहीं कहीं) रसभावादियों में से किसी एक के द्वारा (भी) चित्त को आकर्षित किया जाता है। (वह वाक्य काव्य है)।

**टिप्पणी**–रसभावचमत्कारान्यतमप्राणपेशलः। (वागीश्वरविद्यालङ्कार-कृतवैदिकसाहित्यसौदामिनी 2,7) रसादियों में से किसी एक से भी काव्य सुन्दर हो जाता है।

प्राय: उत्तम काव्य में रस, भाव, अलङ्कार, चमत्कार और ध्वनि आदि तत्त्वों की एक साथ स्थिति होती है। किन्तु इसमें कहीं कहीं इनमें से कोई एक तत्त्व प्रधान होकर रहता है और वह दूसरे की तुलना में अधिक प्रभावोत्पादक होता है।

उदाहरणार्थ- मन्दः कवियश:प्रार्थी गमिष्याम्युपहास्यताम्।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥ रघुवंश 1, 3

यहां प्रधान रूप से उपमा नामक स्फुट अलङ्कार है और हास्यरस गौण है।

**औचित्यं चाप्यनौचित्यं युगपदेव धारयत्।**
**नृसिंहरूपवद् यच्च परादभुतमलौकिकम्**[6] ॥9॥

और जो (काव्य में प्रयुक्त वाक्य) औचित्य और अनौचित्य इन दोनों को एक साथ धारण करता है तथा भगवान् नृसिंह अवतार के रूप की तरह अत्यन्त अद्भुत और अलौकिक होता है। (वह वाक्य काव्य है)।

**टिप्पणी**—भक्त प्रह्लाद की रक्षा तथा उसके पिता हिरण्यकशिपु का वध करने के लिए भगवान् विष्णु ने नृसिंह रूप को धारण किया था। नर और सिंह दोनों के मेल से बना हुआ उनका रूप अद्भुत हो गया था। भगवान् के इस विचित्र रूप की तरह काव्य और नाट्य में प्रयुक्त वाक्यों का रूप अद्भुत हो जाता है। वहाँ नायक नायिकाओं के चरित्र में औचित्य और प्रतिनायक और खलनायकों के चरित्र में अनौचित्य का समावेश हो जाता है। औचित्य और अनौचित्य से भरे वाक्यों को पढ़ने और सुनने से पाठकों, श्रोताओं और प्रेक्षकों को आनन्द की अनुभूति होती है। काव्य और नाट्य में प्राय: औचित्य और अनौचित्य की युगपत् प्रतीति होती है।

**औचित्यं च क्वचिद् यस्मिन्ननौचित्यं च कुत्रचित्।**
**औचित्यं नायके प्रायोऽनौचित्यं प्रतिनायके** ॥10॥

जिसमें कहीं औचित्य होता है और कहीं अनौचित्य होता है। अधिकतर नायक में औचित्य और प्रतिनायक (प्रतिद्वन्द्वी) में अनौचित्य हुआ करता है। (वह वाक्य काव्य है)।

**टिप्पणी**–नाटकादि के भीतर सभी प्रकार के पात्रों में औचित्य और अनौचित्य दोनों होते हैं। परन्तु नायक और प्रतिनायक में क्रमशः औचित्य और अनौचित्य होता है। किन्तु इस सम्बन्ध में कोई निश्चित नियम नहीं है। देश, काल और पात्रों की आवश्यकतानुसार इसमें उलटफेर किया जा सकता है। भारतीय नाटक का नायक प्रायः मदिरापानादि व्यसनों से रहित होता है परन्तु पाश्चात्य देशों के नायकों की स्थिति ऐसी नहीं होती।

**लोकोत्तरचमत्कारव्यञ्जकवर्णनायुतम्।**
**चमत्कारेण युक्तं वा निपुणं कविकर्म यत्[7] ॥11॥**

(मुखकमलम् इत्यादि वाक्यों के द्वारा) जो अलौकिक चमत्कार का अभिव्यञ्जन करने वाली वर्णनशैली से युक्त है अथवा जो चमत्कार से युक्त चातुर्यपूर्ण कविकर्म है (वह वाक्य काव्य है)।

**टिप्पणी**–मुखकमलम् इस वाक्य में मुखं कमलमिव–इस विग्रह से उपमालङ्कार और मुखं कमलमेव–इस विग्रह से रूपकालङ्कार निष्पन्न हो जाता है। नायिका के सौन्दर्यातिशय को बताने के लिए इस प्रकार की कथनशैली अपनाई जाती है। इस तरह या तो (काव्य की) अद्‌भुत वर्णनशैली काव्य होती है अथवा अलौकिक कविकर्म काव्य होता है।

**नानाभावोपसम्पन्नं नानावस्थासमाकुलम्।**
**लोकानुकीर्तनायुक्तं लोकाख्यानयुतं च यत्[8] ॥12॥**

(जड़ वस्तुओं और चेतन प्राणियों से भरे लोकों के) विविध स्वभावों से सम्पन्न, और (उनकी) अनेक प्रकार की अवस्थाओं से समन्वित, लोकजीवन और लोकव्यवहारादि के अनुकरण (नाटक के पात्रों द्वारा नकल) तथा (काव्य और नाटक में लोकजीवन की) प्रवृत्तियों के कथन और कथोपकथाओं से जो युक्त है (वह वाक्य काव्य है)।

**टिप्पणी**–काव्यों में अद्‌भुत घटनाओं का वर्णन किया जाता है और नाटकों में पात्रों द्वारा अभिनय करते हुए रामसीतादि पात्रों की नकल की जाती है। यहाँ अनुकरण शब्द का प्रयोग अभिनय तथा आख्यान शब्द का प्रयोग कथन या वर्णन के अर्थ में किया गया है। भरत, राधावल्लभत्रिपाठी और अभिराजराजेन्द्रमिश्र के मत यहां प्रतिबिम्बित हुए हैं।

**नवीनं स्फुरणोद्भूतं परमानन्ददायकम्।**
**विस्मयप्राणसम्पृक्तं रम्यार्थबोधकं च यत्[9] ॥13॥**

जो नूतन, कवि की सूझ बूझ (मस्तिष्क में सहसा आये मौलिक विचारों) और आस्वादप्रधान बुद्धि से उत्पन्न, बहुत बड़े आनन्द को देने वाला और विस्मयरूप प्राणों से समन्वित एवं रमणीय अर्थ को बतलाने वाला है (वह वाक्य काव्य है)।

**टिप्पणी**—स्फुरण का अर्थ है आस्वादप्रधाना चमत्कारस्वरूपिणी बुद्धि।

**सृष्टिं नवरसां कुर्वन् नियमरहितां तथा।**
**अपूर्वं साधुवादार्हं सत्यं चेतोहरं शिवम्[10] ॥14॥**

नौ रसों वाली तथा नियमविरहित सृष्टि को उत्पन्न करने वाला और विधाता (ब्रह्मा की सृष्टि) के नियमों से रहित, असाधारण एवं अद्भुत, शाबाशी देने योग्य, सत्य, चित्त का अपहरण करने वाला अर्थात् चित्ताकर्षक एवं कल्याणकारी

**टिप्पणी**—ब्रह्मा की सृष्टि में कटु, अम्ल, मधुर, लवण, तिक्त, और कषाय ये छः रस ही होते हैं। किन्तु कवि की सृष्टि काव्य में शृङ्गार, हास्य, करुण, रौद्र, वीर, भयानक, बीभत्स, अद्भुत और शान्त ये 9 रस होते हैं। इसलिए वह विधाता की सृष्टि से बड़ी है। ब्रह्मा की सृष्टि में पद्म में सौरभ पाया जाता है किन्तु कवि की सृष्टि काव्य में पद्मिनी नामक नायिका के स्वस्थ शरीर से सुगन्ध निकलती है और वह कमल की तरह सुगन्ध वाली मानी जाती है। इस प्रकार नायिका के भीतर पद्म की सुगन्ध का होना ब्रह्मा की सृष्टि के नियम के विपरीत है।

**अनेकै र्यदुपाख्यानैः कुतूहलविवर्धकैः।**
**संवादै र्विविधै र्युक्तं गभीरैश्च मनोहरैः ॥15॥**

और कुतूहल को बढ़ाने वाली (बड़ी कथाओं के अन्तर्गत आने वाली छोटी अवान्तर) उपकथाओं, गम्भीर चित्त को हरने वाले नाना प्रकार के संवादों से जो युक्त है (वह वाक्य काव्य है)।

अखण्डबुद्धिनिर्ग्राह्यं हेतुश्चापि चमत्कृतेः।
सदपि लौकिकं वस्तु भातीव यदलौकिकम्[11] ॥16॥

अखण्डबुद्धि से पूरी तरह गृहीत होने योग्य अर्थात् शब्द और अर्थ इन दोनों की समष्टि के रूप में प्रतीत होने वाला, (चित्त में होने वाली) चमत्क्रिया का कारण अर्थात् चित्त में चमत्कार को पैदा करने वाला जो लौकिक वस्तु होता हुआ भी अलौकिक (पंदार्थ) सा प्रतीत होता है (वह वाक्य काव्य है)।

**टिप्पणी**–किसी भी वाक्य के पदों और अर्थों का ज्ञान अखण्डबुद्धि से गृहीत होता है। अखण्डवाक्य में शब्द की अर्थ से और अर्थ की शब्द से पृथक् पृथक् सत्ता नहीं होती अपितु उसमें अखण्ड पदपदार्थ का ज्ञान होता है। जैसे किसी चित्र में नीलपीतादि रंगों की पृथक् सत्ता नहीं होती है इसी प्रकार वाक्य में भी शब्द और अर्थ पृथक् पृथक् न रहकर उस वाक्य में ही अङ्ग बनकर रहते हैं। पानक रस (गुडम्बे और ठंडाई) में गुड़, आम और काली मिर्च आदि का पृथक् पृथक् स्वाद नहीं होता है अपितु उन सब का मिला जुला स्वाद (जायका) चखने को मिलता है। ठंडाई में भी मिश्री, बादाम, सौंफ आदि द्रव्यों का पृथक् पृथक् स्वाद न होकर मिला जुला होता है। ठीक यही स्थिति वाक्यस्थ पदों और उनके अर्थों की होती है।

**पौरत्स्या संस्कृतं हिन्दी तमिला तेलुगूस्तथा।**
**पाश्चात्या चाङ्गली ग्रीका प्राचीना चास्ति नूतना॥17॥**

पूर्व के देश की (विशेष रूप से भारत की) ये भाषायें हैं–संस्कृत, हिन्दी, तमिल और तेलुगू (इसी प्रकार) पश्चिम के देशों की अंग्रेज़ी, ग्रीक भाषायें हैं और (बहुत सी) पुरानी और नवीन भाषायें हैं।

**उक्तिवैचित्र्यसंयुक्ता प्राञ्जला मञ्जुला मृदुः।**
**कठिना सरला भाषा काचिद् यस्मिन् प्रयुज्यते[12] ॥18॥**

इन (भाषाओं) में से उक्तिवैचित्र्य से युक्त, स्पष्ट, सुन्दर, कोमल, कठिन और सरल कोई एक भाषा जिसमें प्रयुक्त होती है (वह वाक्य काव्य है)।

**टिप्पणी**–पूर्व में जापान, भारत आदि देश हैं पश्चिम में ईरान आदि मुस्लिम देश हैं तथा यूरोप के भी बहुत सारे देश हैं जिनमें भिन्न भिन्न भाषायें बोली जाती हैं इनमें नानाविध काव्य और नाटक लिखे जा रहे हैं। काव्य में

उक्तिवैशिष्ट्य का ही महत्त्वपूर्ण स्थान है भाषा का नहीं। राजशेखर का कथन है–

अर्थनिवेशास्त एव शब्दास्त एव परिणमन्तोऽपि।
उक्तिविशेषः काव्यं भाषा या भवति सा भवतु।

**छन्दोबद्धं गतच्छन्दः क्वचिच्चाप्युभयात्मकम्।**
**स्वेच्छया क्रियते यद् वै सुकविभि र्निरङ्कुशैः ॥19॥**

कहीं यह छन्दों से बंधा मिलता है और कहीं छन्दोविहीन होता है और कहीं (चम्पूकाव्य में) छन्द (पद्य) और गद्य दोनों में मिलता है। बिना अङ्कुश के चलने वाले अर्थात् किसी प्रकार के बन्धन में न पड़ने वाले अच्छे कवियों के द्वारा जिसका निर्माण किया जाता है। (वह वाक्य काव्य है)।

**एकस्मिंस्तु क्वचिद् वाक्ये मुक्तके रूपके क्वचित्।**
**क्वचिच्चापि महावाक्ये वाक्यत्वं लक्षितमिदम्।**

कहीं एक वाक्य में कहीं मुक्तक, कहीं रूपक एवं कहीं महाकाव्य में भी यह महावाक्यत्व देखा गया है।

**टिप्पणी**–अकेले वाक्य का उदाहरण शून्यं वासगृहम् (साहित्यदर्पण 2, 1 वृत्ति) तथा महावाक्य के उदाहरण, रामायण और रघुवंशादि हैं।

**·स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।**
**वाक्यानामेकवाक्यत्वं संहत्या यत्र जायते ॥21॥**

अपने अपने अर्थ के बोधन होने पर (अर्थज्ञान होने के पश्चात्) समाप्त हुए (निराकाङ्क्षीभूत) वाक्यों के भीतर एक दूसरे के साथ अङ्गाङ्गिभावसम्बन्ध की अपेक्षा रहने के कारण उन सभी वाक्यों की एकवाक्यता (आसत्ति के कारण) परस्पर मिलने से जिसमें हुआ करती है (वह वाक्य काव्य है)।

**टिप्पणी**–जैसे वाक्य में आकाङ्क्षा, योग्यता और सन्निधि इन तीनों की अपेक्षा होती है वैसे ही महावाक्य में इन तीनों का रहना आवश्यक है। देवदत्त विद्यालय गया, वहां जाकर उसने विधिशास्त्र का अध्ययन किया और अपने उस शास्त्रज्ञान से उसने ग्रामीणों को शिक्षित बनाया। इन तीनों वाक्यों में

आकाङ्क्षा आदि इन तीनों के रहने से महावाक्यत्व है। ठीक इसी तरह राम पिता की आज्ञा से वन चले गये। वहां वन में स्थित उनकी पत्नी सीता का अपहरण करके रावण लङ्का ले गया। लङ्का में रावण का वध करके राम सीता को साथ ले अयोध्या लौट आये। इन रामायणकथावाक्यों की महावाक्यता निष्पन्न हो जाती है।

**चमत्करोति चित्तं यत् कृष्णमेघं तडिद् यथा।**
**चमत्कारात्मकं वाक्यं काव्यं तत् कविनिर्मितम्[15] ॥22॥**

घने काले बादल को (अपनी चमक से) चमकाने वाली बिजली के समान जो (सामाजिक के) चित्त को चमत्कार से भर देता है। (रस, अलङ्कारादि अङ्गों से युक्त) चमत्कार रूपी आत्मा वाला अर्थात् चमत्कारप्रधान और कवि के द्वारा निर्मित वह वाक्य काव्य कहा जाता है।

**टिप्पणी**–काले काले घने बादलों के छाने पर जब आकाश अन्धकार से भर जाता है और उसमें बिजली चमकती है तो बादल भी चमक से भर जाते हैं। काव्य और नाटक को पढ़ने, सुनने और देखने के बाद सहृदय सामाजिकों के चित्त भी चमत्कृत हो जाते हैं। रस, अलङ्कार और चमत्कार से भरे काव्य में चमत्कार की प्रधानता होती है तथा उसके घटक रसादि अङ्गों की गौणता हो जाती है। भरत से लेकर वागीश्वर विद्यालङ्कार तक प्रमुख आचार्यों ने चमत्कारतत्त्व की चर्चा की है।

**वक्तुमस्य नु वैशिष्ट्यं प्रवक्तुं चापि गौरवम्**
**सामान्यलक्षणं त्वेतत् काव्यस्यात्र प्रदर्शितम् ॥23॥**

इसकी विशेषता को बताने के लिए और इसके गौरव का कथन करने लिए यहां सुप्रयुक्तैः सुविज्ञातैः से लेकर काव्यं तत् कविनिर्मितम् (2-22 कारिका) तक यह काव्य का सामान्यलक्षण प्रस्तुत किया है।

**टिप्पणी**–इस सामान्यलक्षण में काव्य के घटकतत्त्वों को बताने के साथ साथ उसके भीतर रहने वाले आत्मस्थानीय चमत्कारतत्त्व का महत्त्व स्वीकार किया है। यहाँ भरत, क्षेमेन्द्र और मम्मटादि प्राचीन और रेवाप्रसादद्विवेदी, अभिराजराजेन्द्रमिश्र तथा राधावल्लभ त्रिपाठी आदि अर्वाचीन आचार्यों के मतों

को सम्मिलित किया है। इनके लक्षणों को आधार बनाकर काव्य के इस सामान्यलक्षण का निर्माण किया है। इससे दो बातें स्पष्ट हो जाती हैं–1. हमारा यह लक्षण मौलिक नहीं है बल्कि प्राचीन और अर्वाचीन प्रचलित काव्यलक्षणों से लिये हुए कतिपय पदों तथा विचारों का समन्वित रूप है। 2. चमत्कारात्मकं वाक्यं काव्यम्–इतना यह काव्यलक्षणांश ही चमत्कारवादी आचार्यों के मतों पर आधारित है। इन्हीं प्राक्तन, नवीन और अतिनवीन आचार्यों की धारणायें ही इसमें प्रतिबिम्बित होती हैं। अत: यह हमारा कोई नया मत नहीं है। केवल इसमें चमत्कारात्मक यह नया सा पद सम्मिलित किया गया है। पूर्ववर्ती आचार्य हरिदास ने विशिष्टशब्दरूपस्य काव्यस्यात्मा चमत्कृति:। (काव्यालोक 4, 200) कहकर चमत्कार को पहले से ही ऊँचा स्थान दे दिया है। रस, अलङ्कार, रीति, ध्वनि, वक्रोक्ति और औचित्य सम्प्रदायों से सम्बद्ध भरत, भामह, वामन, आनन्दवर्धन, कुन्तक और क्षेमेन्द्रादि आचार्यों ने अपने अपने सम्प्रदायों का प्रवर्तन किया है तथा इन आचार्यों का नाम इन्हीं सम्प्रदायों के साथ जुड़ा हुआ है। किन्तु मम्मट एवं मम्मटोत्तरयुग के अधिकांश आचार्य चमत्कारतत्त्व को भी काव्य में महत्त्व प्रदान करते हैं। इसलिए संस्कृतभाषा में लिखित काव्यों और नाटकों का अध्ययन और अध्यापन करते समय विद्वज्जनों को चमत्कारतत्त्व एवं चमत्कारसम्प्रदाय के महत्त्व को भी नहीं भूलना चाहिए।

काव्य और नाटक की चमत्कारप्रधान वर्णनशैली व्याकरण, मीमांसाशास्त्र, इतिहास, पुराणादि से भिन्न प्रकार की होती है। इसी विलक्षणशैली के कारण काव्य को प्राक्तन आचार्य मम्मट ने लोकोत्तरवर्णनानिपुणकविकर्म, अभिराजराजेन्द्रमिश्र ने लोकोत्तराख्यान और राधावल्लभ त्रिपाठी ने लोकानुकीर्तन कहा है। आचार्य मम्मट के द्वारा प्रतिपादित तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुन: क्वापि और लोकोत्तरवर्णनानिपुणं कविकर्म इन काव्यलक्षणों में जिस विशाल एवं समन्वयात्मक दृष्टिकोण को अपनाया गया है उसी को अपनाने में औचित्य है। क्योंकि सभी प्रमुख आचार्यों के मतों में न्यूनाधिक रूप में सारवत्ता एवं गुणवत्ता देखने में आती है अत: जिन तत्त्वों को उन्होंने काव्य के घटकतत्त्व के रूप में स्वीकार किया है उन्हें काव्य के इस सामान्यलक्षण में समाविष्ट करने का प्रयत्न किया है। इस कारण ग्रन्थकार ने यहां किसी

लक्षणविशेष का खण्डन मण्डन न करके प्रमुखमतों की विशेषताओं को समाविष्ट कर लिया है। अन्य तत्त्वों का समावेश करते हुए भी यहाँ अन्त में चमत्कारात्मक वाक्य को काव्य के सामान्यलक्षणांश के रूप में प्रस्तुत किया है। यह चमत्कार काव्य का प्रधान तत्त्व है। चमत्कार और रसादि में उभयविध कार्यकारणभाव सम्बन्ध है। विश्वेश्वर कविचन्द्र ने चमत्कारचन्द्रिका (प्रथमविलास पृ०2) में रसादि को चमत्कार का कारण बताया है क्योंकि ये तत्त्व ही काव्य में चमत्कार रूपी कार्य को उत्पन्न करते हैं। साहित्यदर्पणकार विश्वनाथ ने चमत्कार को रसादि का सार माना है उन्होंने साहित्यदर्पण में अपने प्रपितामह श्रीमन्नारायण का निम्नलिखित मत उद्धृत किया है–चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः। तत्प्राणत्वं चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डित-मुख्यश्रीमन्नारायणपादैरुक्तम्। तदाह धर्मदत्तः स्वग्रन्थे–

रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥
साहित्यदर्पणः 3, 3 वृत्तिः

यहाँ चमत्कार को सब रसों का प्राण माना गया है और इसको अद्भुत रस का सार (स्थायिभाव) भी माना गया है। इस प्रकार चमत्कार रसादि का कारण भी होता है। चमत्कार के बिना रसादि कार्यों की उत्पत्ति नहीं हो सकती। इस प्रकार चमत्कार को रसादि का कारण और कार्य दोनों ही माना जा सकता है। कविकर्णपूर ने भी कहा है–

रसे सारश्चमत्कारस्तं विना न रसो रसः।
तच्चमत्कारसारत्वे सर्वत्रैवाद्भुतो रसः॥
अलङ्कारकौस्तुभः 5, 72 वृत्तिः

यहाँ चमत्कार को अद्भुत रस का स्थायिभाव कहा है। इसलिए कविकल्पनाप्रसूत चमत्कारात्मक वाक्य को काव्य के रूप में स्वीकार किया जाना चाहिए। काव्य के घटकतत्त्व रसादियों का महत्त्व स्वीकार करते हुए वागीश्वर विद्यालङ्कार ने यह मत भी माना है कि केवल चमत्कार होने पर भी काव्य होता है भले ही वहाँ रस या अलङ्कार न हो। वैदिकसाहित्यसौदामिनी 2, 7 तथा वृत्ति

अफसोस बुलबुलों को हम उल्लू न हुए जैसे वाक्यों में उक्तिवैचित्र्यजन्य-चमत्कार होने से काव्यत्व है।

**दृष्ट्वा काव्यगतान् धर्मानाचार्याणां मतानि च।**
**विनिर्मितमिदं तावल्लक्षणमतिविस्तृतम् ॥24॥**

काव्य के भीतर विद्यमान धर्मों (विशेषताओं) तथा आचार्यों के मतों को (भी) देखकर यह अतिविस्तृत (काव्य का सामान्य) लक्षण बनाया है।

**काव्यस्य विशेषलक्षणानि**

**काव्यमार्गे पदं न्यस्य पूर्वसूरिप्रवर्तिते।**
**विशेषलक्षणान्यस्य प्रस्तूयन्ते समासतः ॥25॥**

(काव्य का सामान्यलक्षण बताने के बाद) पूर्ववर्ती विद्वानों के द्वारा आविष्कृत एवं प्रचलित काव्य के पथ पर पैर रखकर इस (काव्य) के विशेष-लक्षण (यहाँ) प्रस्तुत किए जा रहे हैं।

**टिप्पणी**–अन्यूनातिरिक्तविषयत्वं लक्षणत्वम् जो अपने विषय (लक्ष्य) पर न तो न्यून रहे और न ही उससे बाहर जाये उसे लक्षण कहते हैं। लक्षण का यही लक्षण यहां विशेषलक्षण नाम से अभिहित किया गया है।

**काव्यस्य सम्प्रदाया ये प्रचलन्ति रसादयः।**
**तान् निरीक्ष्य विधीयन्ते लक्षणानि यथाबलम् ॥26॥**

काव्य के जो रसादिसम्प्रदाय प्रचलित हैं उनका निरीक्षण करके (ये काव्य के विशेष) लक्षण (अपने) सामर्थ्यानुसार बनाये जा रहे हैं।

**योऽतति व्याप्नुते देहं तत्रानुप्राणिति स्वयम्।**
**अङ्गी भूतो यथा सोऽर्थः कथित आत्मसंज्ञया ॥27॥**

जो (प्राणी की) देह को अतन करके अर्थात् व्याप्त करके रहता है और स्वयं उसमें प्राणों का सञ्चार करता है वह प्रधानीभूत तत्त्व जैसे आत्मसंज्ञा से कहा गया है।

**तथा रसादिकं तत्त्वं काव्यशरीरवर्ति यत्।**
**अङ्गित्वमुपयातं तद् याति काव्यात्मतापदम् ॥28॥**

वैसे (ही) काव्यरूपी शरीर के भीतर रहने वाला जो रस, अलङ्कार, ध्वनि आदि तत्त्व है वह अङ्गिभाव को प्राप्त होता हुआ काव्यात्मतापदवी को प्राप्त कर लेता है।

**टिप्पणी**–संस्कृतकाव्यशास्त्र में रस, ध्वनि और अलङ्कारादि अनेक काव्यसम्प्रदाय प्रचलित हैं। इन सम्प्रदायों के प्रवर्तक आचार्यों ने काव्य के जिस जिस तत्त्व को प्रमुख माना है उस उसको काव्य की आत्मा कहा है। ध्वनि को काव्य की आत्मा बताने वाले आचार्य आनन्दवर्धन ने ध्वनि को अङ्गी (प्रधान) तत्त्व माना है और रस, अलङ्कारादि को उसके अङ्ग (गौण) तत्त्व के रूप में स्वीकार किया है। यही सिद्धान्त अन्य आचार्यों ने भी अपनाया है।

### प्रथमलक्षणम्

**युक्तं शब्दार्थदेहेन ध्वनिप्राणै र्गुणैश्च यत्।**
**अर्थप्रवर्तको यस्मिन्नङ्गित्वेन स्थितो रसः**[16] ॥29॥

जो शब्दार्थ रूपी शरीर, ध्वनि रूपी प्राणों और ओज आदि गुणों से संवलित है और जिसके भीतर (सकल वाच्यादि) अर्थों और प्रयोजनों का प्रवर्तन (संचालन) करने वाला रस (अपने अलङ्कारादि अङ्गों के साथ) अङ्गी अर्थात् प्रधान रूप से रहता है। (उन विशेषताओं से युक्त)

**टिप्पणी**–शब्द और अर्थ काव्य के शरीर कहे जाते हैं और ध्वनि को उसका प्राण माना जाता है। रस के बिना काव्य और नाटकों का कोई प्रयोजन सिद्ध नहीं होता तथा किसी नाटक के पात्र या घटना को रस की ओर दृष्टि रखकर ही समाविष्ट किया जाता है। इस कारण काव्य के घटकतत्त्वों में रस को रसवादी आचार्यों ने सर्वोपरि स्थान दिया है।

**वाक्यं रसात्मकं काव्यं भवेद् तद् वा रसादिमत्।**
**आदिमे रसमुख्यत्वं समप्राधान्यमुत्तरे**[17] ॥30॥

वह रस रूपी आत्मा वाला वाक्य काव्य होता है अथवा रसादि (रसाभास, भाव, भावाभास, अलङ्कार, गुणादि) से युक्त वाक्य भी काव्य होता है। पहले (लक्षण) में रस की प्रधानता है और दूसरे (लक्षण) में सब तत्त्वों की तुल्यप्रधानता है।

**टिप्पणी**–विश्वनाथ ने वाक्यं रसात्मकं काव्यम् (सा० द० 1,3) कहते हुए रसप्रधान वाक्य को काव्य कहा है। कविकर्णपूर ने भी–

शरीरं शब्दार्थौ ध्वनिरसव आत्मा किल रसः। अलङ्कारकौस्तुभ 1,1 रस को काव्य की आत्मा बताया है। इस प्रकार इन दोनों ने अपने काव्यलक्षण में अलङ्कारादि की तुलना में रस को सर्वोपरि स्थान प्रदान किया है। शौद्धोदनिकृत अलङ्कारशेखर (पृष्ठ 2) में काव्यं रसादिमद् वाक्यम् में विद्यमान रसादिमत् शब्द से रस के साथ रसाभासादि तथा अलङ्कारादि का भी ग्रहण हो रहा है। इसी प्रकार भोजरचित सरस्वतीकण्ठाभरण में निम्नलिखित काव्यलक्षण है–

निर्दोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति॥
सरस्वतीकण्ठाभरण 1, 2

इस लक्षण में काव्य के गुणादि घटकतत्त्वों के साथ रस को भी एक तत्त्व के रूप में माना गया है। यहाँ इन सभी तत्त्वों की तुल्यप्रधानता है क्योंकि काव्य में इन सबका समावेश करना आवश्यक है। इस प्रकार काव्य के पहले लक्षण में रस को प्रधान स्थान दिया गया है और दूसरे लक्षण में सभी की समान रूप से प्रधानता दिखाई गई है। रससम्प्रदाय के प्रबल समर्थक आचार्य तो पहले रसप्रधान काव्यलक्षण को स्वीकार करते हैं तथा दूसरे मत को मानने वाले उदारवादी आचार्यों ने रस के साथ साथ काव्य के अन्य घटकतत्त्वों का भी महत्त्व माना है। इस प्रथमकाव्यलक्षण के इन दोनों ही भेदों में रस की स्थिति होने के कारण इनका एक ही काव्यलक्षण बना दिया है।

## द्वितीयलक्षणम्

**काव्यरत्नमलङ्कारोऽलम्भावपूर्णतायुतः।**
**नित्यं तिष्ठत्ययं तस्मिन् नटीनिष्ठाङ्गहारवत्[18] ॥31॥**

अलङ्कार काव्य का रत्न है (इससे काव्य में चमक आ जाती है) यह पर्याप्ति और पूर्णताभाव से संयुक्त है। (इसके अतिरिक्त) नायिका में रहने वाले अङ्गहार (हाव, भाव, बिब्बोक आदि प्रीतिविषयक सङ्केत) की तरह यह काव्य में नित्य रूप से प्रतिष्ठित होकर रहता है।

**टिप्पणी**–काव्य में अलङ्कार से ही पूर्णता आती है इसलिए काव्य में अलङ्कार की नित्यस्थिति मानी जानी चाहिए क्योंकि यह भी काव्य में गुणों की तरह तथा नायिका में रहने वाली हाव भाव भरी चेष्टाओं की भाँति समवायसम्बन्ध से रहने वाला तत्त्व है। उपमा कवियों की माता है ऐसा राजशेखर का मत है।

डॉ० वी० राघवन् की कृति स्टडीज़ ऑन सम् कौन्सैप्ट्स ऑफ अलङ्कार-शास्त्र में इस मत का प्रतिपादन युक्तिपूर्वक किया गया है। वहाँ उन्होंने भरत मुनि के नाट्यशास्त्र के सामान्याभिनयप्रकरण में वर्णित नायिका में पाये जाने वाले हाव भाव रूप अलङ्कारों की तरह काव्य के भीतर विद्यमान इन अलङ्कारों को आवश्यक तत्त्व माना है।

**अलङ्कृतिरलङ्कार्यं सालङ्कारस्य काव्यता।**
**काव्येऽलङ्कार एवात्मा कवितालङ्कृतार्थधीः**[19] ॥32॥

अलङ्कार ही अलङ्कार्य (अलङ्कर्तुं योग्यम् अलङ्कार्यम् अर्थात् शोभा बढ़ाने योग्य प्रधान तत्त्व) है। इसलिए अलङ्कारयुक्त काव्य की ही काव्यता होती है। काव्य में अलङ्कार ही (उसकी) आत्मा है और अलङ्कृतार्थ का ज्ञान ही कविता है।

**टिप्पणी**–काव्यालङ्कारकार भामह तथा वक्रोक्तिजीवितकार कुन्तक का मन्तव्य है कि काव्य में अलङ्कार की ही प्रधानता होती है। रेवाप्रसाद द्विवेदी का कहना है कि जीवात्मा को आनन्दित करने के लिए अलौकिक विभावन व्यापार से युक्त अलङ्कार की पूर्णता से युक्त अर्थ का ज्ञान काव्य है। (काव्यालङ्कारकारिका 1) पर्याप्ति और पूर्णता ही अलङ्कार कहलाती है। यह अलङ्कार स्वयं सौन्दर्य रूप है और सौन्दर्य का स्रोत भी है।

अलम्भावो ह्यलङ्कारः स च सौन्दर्यतत्कृतोः।
विभक्तात्मा विभुर्जीवब्रह्मणोश्चिद्घनो यथा॥
काव्यालङ्कारकारिका 48

राधावल्लभ त्रिपाठी ने तेनास्य पूर्णता, पूर्णता चालङ्कारः, (अभिनव-काव्यालङ्कारसूत्रम् 1, 1, 8 ; 1, 1, 9) अलङ्कार एव काव्यम् (अभि. 1, 1,

10 वृत्ति) तथा अलङ्कारः काव्यजीवनम् (अभि. 2, 1, 1) कहकर अलङ्कारसम्प्रदाय का प्रतिष्ठापन और समर्थन किया है। भामह, कुन्तक, राधावल्लभ त्रिपाठी और रेवाप्रसाद द्विवेदी ये चारों आचार्य अलङ्कारसम्प्रदाय के अनुयायी एवं प्रतिष्ठापक हैं। अभिराजराजेन्द्र मिश्र भी अलङ्कार को काव्य का प्राण मानते हैं। रेवाप्रसाद द्विवेदी का कहना है कि अलम्भाव अर्थात् पूर्णता से युक्त और विच्छित्ति रूप उपमादि अलङ्कारों एवं लक्षण से सम्पन्न ज्ञानविशेष काव्य है। दोषाभाव तथा समस्त अवयवों की अनवद्यता पूर्णता कहलाती है। इन आचार्यों ने चमत्कारसम्प्रदाय को भी माना है।

### तृतीयलक्षणम्

**भाषासौष्ठवसम्पृक्तैरद्भुतार्थावबोधकैः।**
**विशिष्टपदसङ्घातैः करोति यच् चमत्क्रियाम्।।33।।**

भाषासौन्दर्यसमन्वित एवं अद्भुत अर्थों का बोधन कराने वाले (गुण) विशिष्टपदसमूहों के द्वारा जो चमत्कार को करता है।

**उक्तिविशेषवत् काव्यं काव्यं तत् कथ्यते बुधैः।**
**उक्तीनामेव वैशिष्ट्यं काव्योपनिषदुच्यते[20] ।।34।।**

वह उक्तिविशेष (विशेष प्रकार की उक्ति) से युक्त काव्य ही विद्वानों (साहित्यिकों) के द्वारा (वास्तविक) काव्य कहा जाता है। (इस प्रकार) उक्तियों का ही वैशिष्ट्य (कहने का खास अन्दाज़) काव्य का रहस्य कहा जाता है।

**टिप्पणी**--उत्तम काव्य में विशिष्ट अर्थात् विशेष प्रकार की पदावली होनी चाहिए तथा उसमें व्यञ्जनागर्भित उत्तम एवं चमत्कारपूर्ण उक्तियों को समाहित करना चाहिए। भाषा सरल, क्लिष्ट या दोनों ही प्रकार की हो सकती है किन्तु वह ललित होनी चाहिए। उक्ति के वैशिष्ट्य का सम्बन्ध विशिष्टपदसङ्घटनारूपिणी अर्थात् ओज, प्रसादादि गुणवती शैली के साथ भी है। इसमें भावानुरूप भाषा तथा भाषा के अनुरूप भावों का होना अपेक्षित है। राजशेखर ने भी उक्तिविशेष को काव्य माना है (कर्पूरमञ्जरी 1, 7)।

## चतुर्थलक्षणम्

**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**चमत्कारकरी ह्येषा काव्यजीवितमुच्यते[21] ॥35॥**

सभी स्थानों में यह प्रसिद्ध वक्रोक्ति (चातुर्यपूर्ण उक्ति और अतिशयोक्ति रहा करती) है। इससे काव्य का विशेष अर्थ (नायक, नायिकादि रूप विभावादि पात्र) कल्पना का विषय बनता है। (इसके परिणामस्वरूप उसमें चमत्कार आ जाता है) यही चमत्कार को उत्पन्न करने वाली वक्रोक्ति (अतिशयोक्ति) काव्य का प्राण कही गई है।

**टिप्पणी**–भामह और कुन्तक दोनों ही आचार्यों ने वक्रोक्ति का निरूपण किया है किन्तु दोनों की वक्रोक्ति भिन्न प्रकार की  है। भामह के समर्थक विश्वनाथदेव का कहना है कि काव्य में किसी उपमादि विशेष अलङ्कार के न रहने पर वक्रोक्ति जैसे सामान्य (सबमें रहने वाले) अलङ्कार के रहने पर उसमें काव्यत्व मानने में कोई क्षति नहीं होनी चाहिए। यही वक्रोक्ति काव्य का जीवन (प्राण) है। अतिशयोक्ति-अतिशय अर्थात् चमत्कार को उत्पन्न करने वाली इसी उक्ति का नाम भी वक्रोक्ति है। भामह के अनुसार वक्रोक्ति सामान्य अलङ्कार है। यह अतिशयोक्ति रूप होने से सभी अलङ्कारों में रहती है और उपमादि विशेषालङ्कार हैं जो दूसरों में सङ्क्रान्त नहीं होते हैं। काव्यादर्श की हृदयङ्गमा टीका में भी उपमादि से लेकर सङ्कीर्ण पर्यन्त अलङ्कारों को वक्रोक्ति के अन्तर्गत माना गया है।

**वक्रोक्तेरेव वैचित्र्यं काव्ये तु जीवितायते।**
**परिस्फुरति तस्यान्तस्तदेवातिशयान्वितम्[22] ॥36॥**

काव्य में तो वक्रोक्ति का वैचित्र्य ही जीवन की तरह आचरण करता है अर्थात् वही काव्य का प्राण है। उस (काव्य) के भीतर चमत्कार से युक्त वह (वैचित्र्य) ही चमकता है।

**टिप्पणी**–कुन्तक अलङ्कारवादी हैं और वे काव्य में अलङ्कार को आत्मस्थानीय मानते हैं किन्तु वक्रोक्ति को वे काव्य का जीवन मानते हैं। वक्रोक्तिः काव्यजीवितम् अर्थात् वह वक्रोक्ति ही है जो काव्य में प्राणों का

सञ्चार करती है। वक्रोक्ति की रचना भी तभी हो सकती है जब कवि में आवश्यक कल्पना शक्ति हो। इसलिए कवि में काव्यव्यापार की प्रधानता होती है। यह स्मरणीय है कि कुन्तक वक्रोक्ति को काव्यजीवित ही कहते हैं। काव्य की आत्मा के रूप में वे अलङ्कार और रस को ही रखते हैं। कविता को प्रस्तुत करने का ढंग अनूठा और सामान्य से हटकर अलग प्रकार का होना चाहिए। वक्रोक्ति का अर्थ है वैदग्ध्यभङ्गीभणिति विदग्ध चतुर को कहते हैं। चतुर लोगों के द्वारा अपनाये हुए तरीके से कही गई उक्ति वक्रोक्ति कहलाती है। इनकी वह वक्रोक्ति लोकोत्तरचमत्कारकारी वैचित्र्य की निष्पादिका होने के कारण चमत्कारसम्प्रदाय के अत्यन्त निकट है।

मुख स्रवन दृग् नासिका सबही कै इक ठौर।
कहिबो सुनिबो देखिबो चतुरन को कछु और॥
यों तो देखे हैं सुखनवर अच्छे अच्छे।
कहते हैं ग़ालिब का अन्दाज़े बयां और॥
अदा लुभाने की प्यारे तेरी ज़ुबाँ में है।
किसी की आँख में जादू वही तेरी जुबाँ में है॥

इन तीनों ही पद्यों में उक्तिविशेष की महिमा झलकती है।

## पञ्चमलक्षणम्

**शब्दार्थदेहकाव्यस्य ध्वनिरात्मा प्रकीर्तितः।**
**तस्य व्यक्ति र्गुणीभूतैः शब्दार्थैरेव जायते[23] ॥37॥**

शब्दार्थरूपी शरीर वाले काव्य की आत्मा ध्वनि बताई गई है। उसकी अभिव्यक्ति गुणीभूत शब्दार्थों के द्वारा ही होती है।

**टिप्पणी**—ध्वन्यालोक में आचार्य आनन्दवर्धन ने बताया है कि प्राचीन आचार्यों ने ध्वनि को काव्य की आत्मा कहा है तथा उसका लक्षण करते हुए यह भी कहा है कि उसकी प्रतीति तभी होती है जब वाच्यार्थ की गौणता और व्यङ्ग्यार्थ की प्रधानता होती है (ध्वन्यालोक 1, 1; 1, 13)।

**ध्वनेरपरपर्यायो व्यञ्जनावृत्तिरुच्यते।**
**काव्ये प्रतिष्ठते ह्येषा नाभिधा नापि लक्षणा[24] ॥38॥**

(इस) ध्वनि का दूसरा पर्याय व्यञ्जना वृत्ति कही जाती है। काव्य में यह (ही व्यञ्जना वृत्ति) प्रतिष्ठा को प्राप्त होकर रहती है। उसमें न अभिधा होती है और न ही लक्षणा होती है।

**टिप्पणी**—व्यञ्जकपदों से व्यङ्ग्यार्थ का बोधन कराने वाली वृत्ति व्यञ्जना होती है। इस व्यञ्जना के विषय में नवीन आचार्यों का कहना है–उन अर्थों अर्थात् शब्दप्रतिपाद्य वाच्य, लक्ष्य और व्यङ्ग्य अर्थों के बोधन का कारण होना ही व्यञ्जना कहलाता है। इस प्रकार इनके मत में अर्थमात्र की प्रत्यायिका बुद्धि का नाम व्यञ्जना है। शब्दप्रतिपाद्यबोधव्यञ्जकत्वमेव व्यञ्जनत्वम् यह व्यञ्जना का लक्षण है। यही व्यवहार सब जगह है। वह न अभिधा है और न लक्षणा है और सभी अर्थों को बताने वाली व्यञ्जनावृत्ति ही एकमात्र वृत्ति है। किन्तु यदि यही मत माना जाये तो विभिन्न शास्त्रों में अभिधा और लक्षणा वृत्तियों का प्रयोग क्यों देखा जाता है–इस प्रकार की शङ्का नहीं करनी चाहिए। जब वही व्यञ्जना अस्माच्छब्दादयमर्थो बोद्धव्यः अथवा एष शब्द इममर्थं बोधयति इस प्रकार के अनुशासन–सङ्केतग्रह के नियम से साक्षात् सङ्केतित अर्थ का बोध कराती है तो उस समय उसका अभिधा नाम से व्यवहार होता है, उससे जब गङ्गायां घोषः जैसे उदाहरणों में मुख्यार्थबाध के अनन्तर मुख्यार्थातिरिक्त दूसरे अर्थ की प्रतीति होती है तो उस अर्थकी बोधिका उसी व्यञ्जना का लक्षणा के रूप में नाम रखं दिया जाता है और जब वह तीर में बाधित शैत्यपावनात्वादिरूप अर्थ की प्रतीति कराती है तो वह व्यञ्जना होती है। इस प्रकार की युक्ति के आधार पर शास्त्र में व्यवहार होता है। वस्तुतः व्यञ्जना के ही ये तीनों रूप हैं।

## षष्ठलक्षणम्

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते[25] ॥39॥**

निश्चय ही (जैसे लोक में) जिस वस्तु के अनुरूप जो वस्तु होती है (वैसे ही काव्य में जिस रसादितत्त्व पदार्थ के अनुरूप जो भाषा, भावादि तत्त्व

(ढः) चमत्कारविशिष्टं शब्दार्थयुगलं काव्यमिति फलितम्।
छज्जूरामशास्त्रिकृतः साहित्यबिन्दुः पृ०5

(णः) काव्ये चालङ्कारभावरसचमत्कारेष्वन्यतमो ऽवश्यमपेक्ष्यते। अयं चमत्कार एव पूर्वाचार्यैश्चारुता, रमणीयता, छाया, सौन्दर्याह्लादसुखविशेषलोकोत्तरादिशब्दै र्व्यवहृतः।
वायुनन्दनपाण्डेयकृता श्रीमम्मटपण्डितराजसिद्धान्तमीमांसा प्रथमाध्यायः पृ० 23, 40

(तः) रसभावचमत्कारान्यतमप्राणपेशलः।
काव्यं शब्दार्थसन्दर्भोऽलौकिकानन्दसुन्दरः॥
वागीश्वरविद्यालङ्कारकृता वैदिकसाहित्यसौदामिनी 2, 6

(थः) लोकोत्तरतया लोके प्रतितिष्ठदहर्निशम्।
लोकालोकाद्भुतानन्दस्यन्दि साहित्यमुच्चितम्॥
चमत्काराधायकमानन्दं स्यन्दते तादृशं साहित्यम्।
शिवजी उपाध्यायकृतः साहित्यसन्दर्भः 4, 6 तथा वृत्तिः

(दः) ज्ञानात्मकेन शब्दाख्येनार्थेनार्थान्तरात्मकः।
यः कश्चन चमत्कारी बोधः काव्यं स उच्यते॥
अर्थबोधोऽर्थबोधानामन्येषां सन्ततिं सृजन्।
चमत्कारामृतं प्रोक्ष्य रसिके याति काव्यताम्।।
रेवाप्रसादद्विवेदिकृता काव्यालङ्कारकारिका 190, 73

(धः) चमत्कारिबोधजनकशब्दार्थयुगलं काव्यम्।
कृष्णचन्द्रचतुर्वेदकृतः अलङ्कारध्वनिविमर्शः प्रथमप्रवाहः पृ० 6

(नः) कविवाङ्निर्मितिः काव्यम्।

असाधारणचमत्कारिणी रचना निर्मितिः।
रसे सारश्चमत्कारस्तं विना न रसो रसः।

कविकर्णपूरकृतः अलङ्कारकौस्तुभः 1, 2 तथा वृत्तिः; 5, 72
वृत्तिः

(पः) उक्तलक्षणः स चमत्कारश्च न रसाभिन्नो रसस्यैव कश्चिद्

धर्मविशेषो वा। रसप्रधानरचनासु क्वचित् सत्यपि रसे तददर्शनात्। क्वचिच् चित्रकाव्येषु चमत्कारेण सह रसस्यासामान्याधिकरण्याच्च। सहसा असम्भाव्यवस्तुविलोकनजन्मा चित्तस्य धर्मविशेषोऽयं क्षणिकः। अद्भुतरसस्य स्थायिभावो विस्मयस्तु न तथेत्यनयो र्भेदः।

वैदिकसाहित्यसौदामिनी 2, 3 वृत्तिः

16. (कः) ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥

आत्मन एव हि यथा शौर्यादयो नाकारस्य तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम्।

काव्यप्रकाशः 8, 66 तथा वृत्तिः

(खः) उक्तं हि काव्यस्य शब्दार्थौ शरीरं, रसादिश्चात्मा, गुणाः शौर्यादिवत्, दोषाः काणत्वखञ्जत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्कारा: कटककुण्डलादिवत् इति। साहित्यदर्पणः 1, 2 वृत्तिः

(गः) शरीरं शब्दार्थौ ध्वनिरसव आत्मा किल रसो
गुणा माधुर्याद्या उपमितिमुखोऽलङ्कृतिगणः।

सुसंस्थानं रीतिः स किल परमः काव्यपुरुषो
यदस्मिन् दोषः स्याच्छ्रवणकटुतादिः स न परः॥
कविकर्णपूरकृतः अलङ्कारकौस्तुभः 1, 1

(घः) न हि रसाद् ऋते कश्चिदर्थः प्रवर्तत इति।
नाट्यशास्त्रम् 6, 32 वृत्तिः

(ङः) वाक्यं रसात्मकं काव्यम्। ... रस एवात्मा साररूपतया जीवनाधायको यस्य। तेन विना तस्य काव्यत्वाभावस्य प्रतिपादितत्वात्।

साहित्यदर्पणः 1, 3 तथा वृत्तिः

17. (कः) वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः।
उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः॥

साहित्यदर्पण: 1, 3

(ख:) आस्वादजीवातु: पदसन्दर्भ: काव्यम्। यस्तु रसादिहीनेऽपि क्वचन काव्यव्यपदेश: स बन्धादिसाम्याद् गौण एव।

काव्यप्रकाश: 1, 4 दीपिका टीका

(ग:) निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कवि: कुर्वन् कीर्तिं प्रीतिं च विन्दति॥
सरस्वतीकण्ठाभरणम् 1, 1

(घ:) काव्यं रसादिमद् वाक्यं श्रुतं सुखविशेषकृत्।
शौद्धोदनिकृत: अलङ्कारशेखर: पृ० 2

**टिप्पणी**—अत्रादिपदेन रसाभासभावभावाभासादयस्तथाऽलङ्कारा अपि गृह्यन्ते।

(ङ:) यथा प्राणिन: प्राणित्वावस्थायां शरीरस्य चेतनस्यात्मनश्चाधिगमोऽपेक्ष्यते तथा काव्यस्य काव्यत्वावस्थायां वाक्यस्य चमत्काररसात्मनश्च समधिगमोऽपीति नितरां विभाव्यम्। शरीरमन्तरात्मेव वाक्यमन्तरा न रसश्चमत्कुरुते।

साहित्यदर्पण: 1, 3 रुचिरा टीका

18. (क:) अलङ्कार: शिरोरत्नं सर्वस्वं काव्यसम्पदाम्।
उपमा कविवंशस्य मातैवेति मति र्मम॥
राजशेखरकृतकाव्यमीमांसात: गृहीत्वा अलङ्कारशेखरे
एकादशमरीच्यामुद्धृतेयं कारिका परं नोपलभ्यते
काव्यमीमांसायाम्।

(ख:) आह्लादयन्त्यलङ्कारा: काव्यनाटकसंस्थिता:।
चमत्कुर्वन्ति चित्तेषु नटीनामङ्गहारवत्॥
चमत्कारकरा ह्येते रसभावसहोदरा:।
अनिवार्या स्थितिरेषां सत्काव्येषु सुनिश्चिता॥

रामप्रतापकृत मम्मटोत्तरयुग में भारतीय काव्यशास्त्र में नूतन अवधारणाएं तृतीय अध्याय (काव्य में अलङ्कारों का स्थान) पृ० 125

(ग:) Such figures can hardly be considered extrinsic (Bahiranga) in kavya and comparable only to the armlets (Kataka and Keyura) the removable ornaments. Alamkaras should properly be compared to the alamkaras of damsels which Bharata speaks of under samanyabhinaya Bhava, Hava etc. *i.e.* graces of a lady and not to the external jewls like the kataka and keyura.

Studies on some concepts of Alamkarashastra by Dr. V.Raghavan chapter–II Use and abuse of Alamkara pp. 57 and 58.

19. (क:) न कान्तमपि निर्भूषं विभाति वनितामुखम्।
काव्यालङ्कार: 2, 13

(ख :) अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।
तदुपायतया तत्त्वं सालङ्कारस्य काव्यता॥

तत्त्वं सालङ्कारस्य काव्यता। अयमत्र परमार्थ: सालङ्कारस्य अलङ्कारसहितस्य सकलस्य निरस्तावयवस्य सत: कविकर्मत्वम्। तेन अलङ्कृतस्य काव्यत्वमिति स्थिति:। न पुन: काव्यस्यालङ्कारयोग इति।

वक्रोक्तिजीवितम् 1, 6 तथा वृत्ति:

(ग:) तेन अलङ्कार एव काव्यम्। राधावल्लभत्रिपाठिकृतम्
अभिनवकाव्यालङ्कारसूत्रम् 1, 1, 10

(घ:) काव्येऽलङ्कार एवात्मा स एवास्मिन् स्थितो यत:।
अन्यकायस्थितो धर्म: किमन्यत्रात्मतां व्रजेत्॥
आनन्दकोषस्योल्लासे लोकोत्तरविभावना।
अलङ्कृतार्थसंवित्ति: कविता सर्वमङ्गला॥
या चैषा पूर्णतायुक्ता संविन् नाम्नी नवा वधू:।
सैव विच्छित्तिसम्पन्ना कवितात्वं प्रपद्यते॥
रेवाप्रसादद्विवेदिकृता काव्यालङ्कारकारिका 61, 1, 230

दोषाभावात्मा सर्वावयवानवद्यता हि पूर्णता
(काव्यालङ्कारकारिकाया: पृ० 338 प्रथमसंस्करणम्)

(ङ:) अलङ्कारास्त्वेते लोकास्वाद्यकाव्यस्य जीवातुभूताः। अभिराजयशोभूषणम् 1, 45 वृत्तिः

20. (क:) रीतिरात्मा काव्यस्य। विशिष्टा पदरचना रीतिः।
विशेषो गुणात्मा।
काव्यालङ्कारसूत्रवृत्तिः 2, 6, 8

(ख:) अर्थनिवेशास्त एव शब्दास्त एव परिणमन्तोऽपि।
उक्तिविशेषः काव्यं भाषा या भवतु सा भवतु॥
राजशेखरकृता कर्पूरमञ्जरी 1, 7

21. (क:) सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारो ह्यनया विना॥
भामहकृतः काव्यालङ्कारः 2, 85

(ख:) अत्र च विशेषालङ्कारविरहेऽपि सामान्यालङ्कारसत्त्वान्न काव्यत्वहानिरित्यवधेयम्। यथा... आपृच्छस्य सखी... तत्रापि गोदावरी॥ यथावा- अच्छिन्नं नयनाम्बु... दुःखं विभक्तं तया॥

अत्रोभयत्र वक्रोक्तिः काव्यजीवितं तस्या एव पुरःस्फूर्तिकत्वात्। प्राधान्येन व्यपदेशा भवन्तीति न्यायात्। अत एवोक्तम्-

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥
वक्रोक्तिश्च चमत्कारकारिण्युक्तिः।
साहित्यसुधासिन्धुः 1, 4 वृत्तिः

(ग:) वक्रोक्तिशब्देन उपमादयः सङ्कीर्णपर्यन्ता अलङ्कारा उच्यन्ते।
काव्यादर्शः 2, 8 हृदयङ्गमा टीका

(घ:) लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये।
काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते॥
वक्रोक्तिजीवितम् 1, 2

22. (क:) अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।

तदुपायतया तत्त्वं सालङ्कारस्य काव्यता॥

अयं परमार्थः- सालङ्कारस्यालङ्करणसहितस्य सकलस्य निरस्तावयवस्य सतः समुदायस्य काव्यता कविकर्मत्वम्। तेनालङ्कृतस्य काव्यत्वमिति स्थितिः न पुनः काव्यस्यालङ्कारयोगः इति। वक्रोक्तिजीवितम् 1, 6 तथा वृत्तिः

(खः) अलम्भावोऽलङ्कारः। काव्यालङ्कारकारिका 48

(गः) विचित्रो यत्र वक्रोक्तिवैचित्र्यं जीवितायते।
परिस्फुरति यस्यान्तः सा काप्यतिशयाभिधा॥
वक्रोक्तिजीवितम् 1, 42

(घः) अर्थविशेषास्त एव शब्दाः परिणमन्तोऽपि।
उक्तिविशेषः काव्यं भाषा या भवति सा भवतु॥
राजशेखरकृता कर्पूरमञ्जरी 1, 7

(ङः) किमिदमुक्तिवैचित्र्यम्? उक्ति र्हि वाच्यविशेषप्रतिपादि वचनम्।
ध्वन्यालोकः 4, 7 वृत्तिः

(ङः) उभावेता----भणितिरुच्यते॥
विचित्रैवाभिधा वक्रोक्तिरित्युच्यते।

वक्रोक्तिजीवितम् 1, 10 वृत्तिः

23. (कः) काव्यस्यात्मा ध्वनिरिति बुधै र्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्॥
ध्वन्यालोकः 1, 1

(खः) शरीरं शब्दार्थौ ध्वनिरसव आत्मा किल रसो
गुणा माधुर्याद्या उपमितिमुखोऽलङ्कृतिगणः।
सुसंस्थानं रीतिः स किल परमः काव्यपुरुषो
यदस्मिन् दोषः स्याच्छ्रवणकटुतादिः स न परः॥
अलङ्कारकौस्तुभः 1, 1

(ग:) यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥
ध्वन्यालोकः 1, 13

24. (क:) वक्त्रादियोगमासाद्य बाधितार्थस्य बोधिका।
वृत्ति र्यत्र भवेत् काचित् स शब्दो व्यञ्जको मतः॥

सा च वृत्ति र्व्यञ्जनेत्यवधेयम्। नव्यास्तु तद्धीजनकत्वमेव व्यञ्जना। सैव सर्वत्र वृत्ति र्नाभिधा न लक्षणा। न च कथं तर्हि शास्त्रे अभिधादिव्यवहार इति वाच्यम् यदा सैव व्यञ्जनाऽनुशासनेनानुशिष्यते तदाऽभिधेति व्यवह्रियते यदा च मुख्यार्थबाधानन्तरमन्यार्थप्रतिपत्तिस्तदा लक्षणेति व्यवहारो यदा च बाधितार्थबोधिका तदा व्यञ्जनेत्याश्रयणात्।

साहित्यसुधासिन्धुः 2, 19 वृत्तिः

(ख:) प्रत्युज्जीवयति स्वकीयविभवैः शक्त्या परं कुण्ठितं
नानार्थैः सरसीकरोति सहसा सामाजिकानां मनः।
बाधाद्भीतिरहो फलग्रहिलया त्यक्ता परं दूरतः
सेयं वारविलासिनीव विदुषामास्ते हृदि व्यञ्जना॥
साहित्यसुधासिन्धुः 2, 20

25. (क:) उचितं प्राहुराचार्याः .... प्रचक्षते॥

यत्किल यस्यानुरूपं तदुचितमुच्यते तस्य भावमौचित्यं कथयन्ति। औचित्यविचारचर्चा 7 कारिका तथा वृत्तिः

(ख:) कण्ठे मेखलया नितम्बफलके तारेण हारेण वा
पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा।
शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यता-
मौचित्येन विना रुचिं प्रतनुते नालङ्कृति र्नो गुणः॥
औचित्यविचारचर्चा 6 वृत्तिः

26. उचितैरेव वचनैः काव्यमायाति चारुताम्।
अदैन्यधन्यमनसां वदनं विदुषामिव॥

औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।
रसजीवितभूतस्य विचारं कुरुतेऽधुना॥
अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्॥
औचित्यविचारचर्चा 22, 3, 5

27. (कः) मृदुललितपदाढ्यं गूढशब्दार्थहीनं
जनपदसुखबोध्यं युक्तिमन्नृत्ययोग्यम्।
बहुकृतरसमार्गं सन्धिसन्धानयुक्तं
भवति जगति योग्यं नाटकं प्रेक्षकाणाम्॥
भरतनाट्यशास्त्रम् 16, 124

(खः) काव्यस्य ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थः।

ध्वन्यालोकः 1, 2 वृत्तिः

(गः) स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्।

रसगङ्गाधरः प्रथमाननम् काव्यलक्षणप्रकरणम्

(घः) लोकानुकीर्तनं काव्यम्। तस्य लोकस्यानुकीर्तनं काव्यम्।... अनुकीर्तनं शब्दैः पुनराविष्करणम्। शब्दाश्च भवन्ति सार्थाः। इत्थमनुकीर्तनमिति पदेन निर्दुष्टयोः सगुणयोः सालङ्कारयो रसाभिव्यञ्जकयोश्च शब्दार्थयोः सङ्ग्रहः। अनेन अनुकीर्तनेन काव्ये पूर्णता आयाति सैव अलङ्कारः।

राधावल्लभत्रिपाठिकृतम् अभिनवकाव्यालङ्कारसूत्रम् 1, 1, 1 तथा 1, 1, 10 वृत्तिः

28. (कः) जायते परमानन्दो ब्रह्मानन्दसहोदरः।
यस्य श्रवणमात्रेण तद् वाक्यं काव्यमुच्यते॥

वस्तुतस्तु अदोषं गुणवत् काव्यमित्यादिवाक्यप्रतिपादितस्वर्गविशेष-जनकतावच्छेदकं काव्यत्वमखण्डं कल्पनीयं। तदेव काव्यलक्षणमस्तु।

विश्वनाथदेवकृत: साहित्यसुधासिन्धु: 1, 4 तथा वृत्तिः।

**टिप्पणी**–अत्र काव्यत्वमखण्डं कल्पनीयमित्यनेन अखण्डवाक्यं काव्यमित्यर्थस्य प्रतीतिः। स्वर्गविशेषेण च निर्वृत्यात्मनश्चमत्कारस्य बोधो जायते। एवं अखण्डकाव्यत्वावच्छिन्नं काव्यमिति काव्यलक्षणं कर्तुं शक्यते। काव्ये काव्यत्वं गवि गोत्वमिव तिष्ठति।

(ख:) नवीनास्तु-काव्यत्वमखण्डोपाधिः चमत्कारजनकतावच्छेदकस्य काव्यपदप्रवृत्तिनिमित्तस्य चान्यस्य वक्तुमशक्यत्वात्। तदेव लक्षणमस्तु।

काव्यप्रकाश: 1, 4 काव्यप्रकाशखण्डनटीका

(ग:) न वाक्यावस्थायां पदानि पदार्था वा विभिद्यन्ते यथा चित्रे नीलपीत-रक्तादयः पानके गुडाम्लीकमरिचादयो ग्रामरागे षड्जर्षभगान्धारादयः पृथक्त्वेन नावभासन्ते तथा क्रियाकारकविशेषणादिपदानि तदर्थवाक्यार्था अभेदेनैव प्रतीयन्ते। वाक्यार्थो हि पदपर्यायस्त्वखण्ड एवाभिधीयमानो दृश्यते।

काव्यप्रकाश: 5, 47 विवेकटीका

(घ:) अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यो वाक्यमेव च वाचकम्।
काव्यप्रकाश: 5, 47 वृत्तिः

(ङ:) नित्यमनेकानुगतं सामान्यं जातिरिति जातेः प्रसिद्धं लक्षणम्।

29. निर्दोषा लक्षणवती सरीति गुंणभूषिता।
सालङ्काररसानेकवृत्ति र्वाक् काव्यनामभाक्॥

चन्द्रालोक: 1, 7

**टिप्पणी**–अस्मिन् काव्यलक्षणे वागिति विशेष्यदलं बाह्यस्वरूपप्रतिपादकम्, लक्षणवृत्तिरीतिगुणालङ्काररसानां विशेषणदलम् आभ्यन्तरस्वरूपप्रतिपादकम्। अतएव इमानि तत्त्वानि स्वरूपाधायकानि मन्तव्यानि न तु इमानि कटककुण्डलादिवत् उत्कर्षकारकाणि प्रोक्तानि।

30. इत्यादि लक्षणं भूरि काव्यस्याहु र्महर्षयः।
स्वर्णभ्राजिष्णुभालत्वप्रभृतीव महीभुजः॥

चन्द्रालोकः 1, 11

**टिप्पणी**—यथा सामुद्रिकशास्त्रे राज्ञो लक्षणत्वेन स्वर्णभ्राजिष्णुभालत्वादिकमुच्यते तथैव काव्यस्यैतानि लक्षणानि स्वरूपाधायकानि कथ्यन्ते। यथा च स्वर्णभ्राजिष्णुललाटत्वं नृपत्वप्रतिपादकं तथैवैतानि लक्षणान्यपि काव्यत्वप्रतिपादकानि सन्ति। इमानि तु काव्यस्य चिह्नानि सञ्जायन्ते।

नाट्यशास्त्रे भरतेन भूषणाक्षरसङ्घातशोभानामकानि लक्षणानि एवं निरूपितानि–

अलङ्कारै र्गुणैश्चैव बहुभिः समलङ्कृतम्।
भूषणैरिव चित्रार्थैस्तद् भूषणमिति स्मृतम्॥
यत्राल्पैरक्षरैः श्लिष्टै र्विचित्रमुपवर्ण्यते।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम्॥
सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रयुज्यते।
यत्र श्लिष्टा विचित्रार्था सा शोभेत्यभिधीयते॥
नाट्यशास्त्रम् 16, 6-8

**टिप्पणी**–(कः) अत्र भूषणपदस्य कृते विशेषणतया प्रयुक्तानां चित्रविचित्रविचित्रार्थपदानां प्रयोगेण इदं प्रतीयते यदिदं भूषणपदं चमत्कारपदस्य समानार्थकम् विद्यते।

(खः) इमानि लक्षणानि काव्यस्य नाटकस्य च ज्ञापकानि सन्ति एतानि षट्त्रिंशत् लक्षणानि इत्युच्यन्ते। लक्ष्यते नाटकस्वरूपं ज्ञायते एभिरिति व्युत्पत्तेः। साहित्यदर्पणः 6, 170-171 कुसुमप्रिया टीका॥

(गः) नाटकीयवस्तुनो मनोहरातिशयं प्रदर्शयितुं विधेयमुपपादयति। साहित्यदर्पणः 6, 170-171 लक्ष्मीटीका

31. काव्यं रसादिमद् वाक्यं श्रुतिसुखविशेषकृत्।

शौद्धोदनिकृतः अलङ्कारशेखरः पृ० 2

**टिप्पणी**—अत्रादिपदेन रसचमत्कारालङ्कारादयोऽपि गृह्यन्ते। रसादिमद् वाक्य मिति एतल्लक्षणानुकृत्या चमत्कारादिमद् वाक्यं काव्यमिति एषा लक्षणनिर्मितिः।

32. I. (क:) क्वाप्यनौचित्यसम्मिश्रमितिकथनेन सर्वत्रौचित्यसम्मिश्रं किन्तु क्वचित् क्वचित् तदभावेऽपि अनौचित्यसम्पृक्तं वाक्यं चमत्कारसत्त्वात् काव्यपदवीं प्राप्नोति निःशेषच्युतचन्दनमित्यादिवाक्यवत् (काव्यप्रकाशः 1, 2)।

(ख:) औचित्यरचितं वाक्यं सततं सम्मतं सताम्।
त्यागोदग्रमिवैश्वर्यं शीलोज्ज्वलमिव श्रुतम्॥
औचित्यविचारचर्चा 12 कारिका

(ग:) **टिप्पणी**—रसादिरहितं क्वचिदिति कथनेन सर्वत्र रसादिसहितं क्वचिच्च तदभावेऽपि चमत्कारसत्त्वात् तस्य काव्यत्वं नैव हन्यते।

कल्पनाप्रधानम्, उक्तिवैचित्र्यात्मकं, विरोधगर्भं, विविधालङ्कारैरुपस्कृतं चित्रं काव्यं स्ववैलक्षण्येन चित्तं यथा चमत्करोति न तथा रसकाव्यम्। वैदिकसाहित्यसौदामिनी 2, 3 वृत्तिः

(घ:) काव्यं लोकोत्तराख्यानं रसगर्भं स्वभावजम्।

आख्यायते शब्दार्थसमष्ट्येत्याख्यानम्। अभिराजराजेन्द्र-मिश्रकृतमभिराजयशोभूषणम् 1, 34 तथा वृत्तिः

**टिप्पणी**—अत्राख्यानपदस्यार्थद्वयम्-लोकोत्तरवर्णना लोकोत्तरकथनोपकथनं च।

(ङ:) लोकानुकीर्तनं काव्यम्।
राधावल्लभत्रिपाठिकृतम् अभिनवकाव्यालङ्कारसूत्रम् 1, 1,1

II. (क:) चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायस्तत्प्राणत्वं चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम्।

साहित्यदर्पणः 3, 3 वृत्तिः

(ख:) यच्चोक्तं चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्यात् इति तदङ्गीकुर्म एवं नाम्नि खल्वयं विवादः इति। ध्वन्यालोकः 1, 13 काव्यविशेष इति पदे अभिनवगुप्तकृता लोचनटीका

(ग:) वागर्थौ सचमत्कारौ काव्यं काव्यविदो विदुः।

विश्वेश्वरकविचन्द्रकृता चमत्कारचन्द्रिका प्रथमो विलासः पृष्ठम् 3

(घः) 1. कटाक्षितं व्यञ्जनैका तत्रास्वादो रसः स्मृतः।
दार्ढ्यं गुणानुसन्धानं चारुतालङ्कृतिः स्फुटम्॥
विशिष्टशब्दरूपस्य काव्यस्यात्मा चमत्कृतिः।
उत्पत्तिभूमिः प्रतिभा मनागत्रोपपादितम्।।
हरिप्रसादकृतकाव्यालोकः सूत्रसङ्ख्या 200

2. भाव्यमाने चमत्कारः सुखातिशयकारणम्।
वस्त्वलङ्काररूपोऽपि काव्यस्यात्मा मतं मतम्॥
तत्रैव सूत्र सं 6

3. लोकोत्तराह्लादकः शब्दः काव्यम्। तत्रैव प्रथमप्रकाशः, सूत्रसं 7.

(ङः) चमत्कारविशिष्टं शब्दार्थयुगलं काव्यमिति फलितम्।
छज्जूरामशास्त्रिकृतः साहित्यबिन्दुः पृ० 5

(चः) वस्तुतः चमत्कारिशब्दार्थौ काव्यमिति निर्दुष्टं काव्यलक्षणं ज्ञेयम्।

चमत्कर्तुं शीलमनयोरिति चमत्कारिणौ तौ च शब्दार्थौ चमत्कारि शब्दार्थौ काव्यम्। चमत्कृतिश्चानन्दविशेष इति पण्डितराजः।

वायुनन्दनपाण्डेयकृतश्रीमम्मटपण्डितराजसिद्धान्तमीमांसा पृ० 40

(छः) ज्ञानात्मकेन शब्दाख्येनार्थेनार्थान्तरात्मकः।
यः कश्चन चमत्कारी बोधः काव्यं स उच्यते॥
अर्थबोधोऽर्थबोधानामन्येषां सन्ततिं सृजन्।
चमत्कारामृतं प्रोक्ष्य रसिके याति काव्यताम्॥
रेवाप्रसादद्विवेदिकृता काव्यालङ्कारकारिका 190, 73

(जः) रसभावचमत्कारान्यतमप्राणपेशलः।
काव्यं शब्दार्थसन्दर्भोऽलौकिकानन्दसुन्दरः॥
चमत्कारः शब्दार्थालङ्कारादीनां कुशलप्रयोगजन्या चित्तचमत्कृतिः।

वागीश्वरविद्यालङ्कारकृता वैदिकसाहित्यसौदामिनी 2,6 तथा वृत्तिः

33. स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्। ... काव्यजीवितं चमत्कारित्वं चाविशिष्टमेव। रसगङ्गाधरः प्रथमाननम् काव्यलक्षणम्

34. वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः।
उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः॥
साहित्यदर्पणः 1, 3

35. अथवा काव्यत्वं नाम गोत्वादिवज्जातिरेव। कविकर्णपूरकृतः अलङ्कार-कौस्तुभः 1, 2 वृत्तिः

36. इमासु (29-50) कारिकासु काव्यस्य विशेषलक्षणानि प्रदर्शितानि। एषु लक्षणेषु रसालङ्कारोक्तिविशेषवक्रोक्तिध्वन्यौचित्यकाव्यचमत्कारसम्बद्धसम्प्रदायानां विचाराः समावेशिताः। लक्षणप्रसङ्गावसाने ग्रन्थप्रणेत्रा चमत्कारसम्प्रदायं प्रति स्वकीयाभिरुचिः समर्थनमभिनिवेशश्च प्रदर्शितः। (51-60 कारिकाः)।

यद्यपि विभिन्नकाव्यसम्प्रदायानां प्रवर्तकाः समर्थकाश्चाचार्याः स्वीयां स्वीयां रुचिमनुरुध्य काव्यलक्षणानि निर्मितवन्तः किन्तु सर्वसम्मतं काव्यलक्षणमिदानीं यावन्न दृष्टिपथमायाति। काव्ये चमत्काराधानं भवितव्यमिति मतं तु न्यूनाधिकरूपेण प्रायशः सर्वैः प्रमुखैराचार्यैः स्वीक्रियत एवेति वक्तुं पार्यते।

37. (कः) लोकानुकीर्तनं काव्यम्।
अभिनवकाव्यालङ्कारसूत्रम् 1, 1, 1

(खः) अनुकीर्तनं शब्दैः पुनराविष्करणम्। शब्दाश्च भवन्ति सार्थाः। इत्थमनुकीर्तनमिति पदेन निर्दुष्टयोः सगुणयोः सालङ्कारयो रसाभिव्यञ्जकयोश्च शब्दार्थयोः सङ्ग्रहः। अनेनानुकीर्तनेन काव्ये पूर्णता आयाति सैव अलङ्कारः।

राधावल्लभत्रिपाठिकृतमभिनवकाव्यालङ्कारसूत्रम् काव्यलक्षणनिरूपणम् 1, 1, 7 वृत्तिः

38. तच्च साहित्ये प्रतिफलति। तत्रैव 1, 1, 6 तथा वृत्तिः

39. (क:) काव्यं लोकोत्तराख्यानं रसगर्भं स्वभावजम्।
आख्यायते शब्दार्थसमष्ट्या इति आख्यानम्।
अभिराजराजेन्द्रमिश्रकृतम् अभिराजयशोभूषणम् 1, 36 तथा वृत्तिः

(खः) अलङ्कारकौस्तुभः 1, 2

40. (कः) लोकोत्तरवर्णनैव काव्यम्।.... वर्णना चमत्कारानुकूलपदकदम्बः।
काव्यप्रकाशः 1, 2 मधुमती टीका

(खः) लोकादचमत्कारिणो बोधादुत्तरोत्कृष्टा चमत्कारिणी या वर्णना बुद्धिः तन्निपुणं कविकर्म काव्यम्।

काव्यप्रकाशः 1, 2 विवरणटीका

41. अथवा काव्यत्वं नाम गोत्वादिवज्जातिरेव। यथा सास्नाद्यवयववतीषु गोव्यक्तिषु प्रत्येकमयं गौरयं गौरित्यनुगताकारा येनासाधारणधर्मेणावगतिः स एव जातिलक्षणः कोऽप्यसाधारणधर्मो गोत्वं तथा शब्दार्थसङ्घातस्य सहृदयहृदयास्वाद्यः कोऽपि काव्यत्वजातिलक्षणो धर्मविशेषः काव्यत्वम्।

कविकर्णपूरकृतः अलङ्कारकौस्तुभः 1, 2 वृत्तिः

42. यत्र वाकाशादिपदेनानन्त्यव्यभिचारस्तत्र सा व्यक्तावपीति नानुपपत्तिः।
साहित्यसुधासिन्धुः 2, 12 वृत्तिः

43. (कः) देवदत्तप्रभवत्वादिधर्मो न जातिः साङ्कर्यापत्त्या तादृशजात्यनङ्गीकारात् अखण्डोपाधेरेव स्वीकारात्।

साहित्यसुधासिन्धुः 1, 4 वृत्तिः

(खः) किन्तु सगुणावित्यनेनास्वादव्यञ्जकत्वमुक्तम्। तेनास्वादजीवातुः पदसन्दर्भः काव्यमिति चण्डीदासप्रभृतयः। तन्न, आस्वादवदर्थोपस्थापकपदत्वं पदोपस्थाप्यास्वादवदर्थत्वं वा काव्यत्वमिति विनिगमनाविरहेणोभयस्य काव्यत्वात्। ... न च तादृशजात्यङ्गीकारे साङ्कर्यशङ्केति वाच्यम् अखण्डोपाधेरेव स्वीकारात्। वस्तुतस्तु साङ्कर्यस्य दूषकताबीजाभावाददूषकत्वमेवेति ब्रूमः।

विश्वनाथदेवकृतः साहित्यसुधासिन्धुः 1, 4 वृत्तिः

44. (कः) काव्यसारः काव्यस्य सारः प्रधानभूतमात्मभूतरूपेण संस्थितं तत्त्वमित्यर्थः। वाक्यं रसात्मकं काव्यम्। रस एवात्मा साररूपतया जीवनाधायको यस्य।

साहित्यदर्पणः 1, 3 तथा वृत्तिः

**टिप्पणी**–अस्मिन् स्थले रसः काव्ये सारतयाऽवतिष्ठते इति विश्वनाथेन प्रतिपादितम्। अपि च आनन्दवर्धनेन-काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थः (ध्वन्यालोकः 1, 2 वृत्तिः)। इत्यनुकृत्या काव्यसारश्चमत्कार इति प्रयोगः क्रियते।

(खः) वयं तु पश्यामो रसे स्फुटालङ्कारविरहिणि न काव्यत्वं यतो रसा अलङ्काराश्च द्वयं चमत्कारहेतुः। तथा च यत्र रसादीनामेवावस्थानं न तत्र स्फुटालङ्कारापेक्षा। नीरसे तु यदि स्फुटालङ्कारः स्यात् तत् किं कृतश्चमत्कारः स्यात् ? चमत्कारसारं च काव्यमिति स्फुटालङ्कारापेक्षा।

काव्यप्रकाशः 1, 4 प्रदीपटीका

(गः) यच्चोक्तं चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्यात् तदङ्गीकुर्मः। एवं नाम्नि खल्वयं विवादः।

ध्वन्यालोकः 1, 13 लोचनटीका

45. (कः) चमत्काररसमिति-चमत्कारो रसः सारः प्रधानतत्त्वं यस्मिन् तदिति तात्पर्यम्। अस्मिन् विषये चिरञ्जीवरामदेवभट्टाचार्येण कथितम्-सत्यपि च रसादौ विना विलक्षणचमत्कारमभिज्ञानां काव्यमिदमिति न प्रतीतिरपीति साधु वदन्ति।

काव्यविलासः पृ० 3

(खः) चमत्कारमात्रस्वरूपस्य रसस्य काव्यत्वदशामुत्तमत्वादिभेदाध्यवसायः इति। साहित्यदर्पणः 1, 3 शिवदत्तगौडकृता रुचिरा टीका

46. लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः।

रसगङ्गाधरः प्रथमाननम् काव्यलक्षणम्

47. चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्। तत्रैव काव्यलक्षणम्

48. काव्यजीवितं चमत्कारित्वं चाविशिष्टम्।

रसगङ्गाधरः प्रथमाननम् काव्यलक्षणम्

49. **टिप्पणी**—यदि चमत्कारिकाव्यमित्यत्र चमत्कारित्वमेव काव्यत्वम् इत्येतत् काव्यलक्षणं क्रियते तर्हि अत्र जातित्रयमापद्यते–1. चमत्कारत्वविशिष्टश्चमत्कारः 2. चमत्कारोऽस्मिन्नस्ति इति चमत्कारि 3. काव्यत्वविशिष्टं काव्यम्। एवमत्र साङ्कर्यदोषावाप्तिः स्यात्। अपि च चमत्कारि काव्यमित्यत्र सामान्याधिकरण्यरूपो विशेष्यविशेषणभावश्चापि न स्यात्।

सङ्करदोषस्य लक्षणमेवंविधम्-परस्परात्यन्ताभावसमानाधिकरणयो र्धर्मयोरेकत्र समावेशः सङ्करः। जातिगतसङ्करदोषवारणाय उपाधिरत्र परिकल्प्यते यथोक्तं विश्वनाथदेवेन साहित्यसुधासिन्धौ-

न च तादृशजात्यङ्गीकारे साङ्कर्यशङ्केति वाच्यम्, अखण्डोपाधेरेव स्वीकारात्। वस्तुतस्तु साङ्कर्यस्य दूषकताबीजाभावाददूषकत्वमेवेति।.......यत्र वाऽऽकाशादिपदेनानन्त्यव्यभिचारस्तत्र सा व्यक्तावपीति नानुपपत्तिः।

साहित्यसुधासिन्धुः 1, 4 वृत्तिः ; 2, 12 वृत्तिः

50. (कः) अनौचित्याद् ऋते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा।।
ध्वन्यालोकः 3, 14 वृत्तिः
भरतनाट्यशास्त्रम् 6, 32 अभिनवभारती टीका

(खः) तच्चानौचित्यं सर्वरसानां विभावादौ सम्भाव्यते। तेन व्यभिचारिणामप्येषा वार्ता।
भरतनाट्यशास्त्रम् 6, 32 अभिनवभारती टीका

51. यद्यप्ययं रसाभासः परोढरमणीरतिः।
तथापि ध्वनिवैशिष्ट्यादुत्तमं काव्यमेव तत्।।
कविकर्णपूरकृतः अलङ्कारकौस्तुभः 5, 72 वृत्तिः

52. (क:) भवत्वेतदनौचित्यं रसभङ्गस्य कारणम्।
काव्योत्तमे रसाभासे नास्ति किन्तु स्थितिरियम्।।
चार्वनौचित्यमेवैका.... स्थिरजीवितम्॥
वी. राघवन् सम् कन्सैप्ट्स ऑफ अलङ्कारशास्त्र हिस्ट्री ऑफ औचित्य इन संस्कृत पोइटिक्स पृ० 278

In poetry of Rasa, Auchitya is the very life, Jivita, but in comic writing the very life of its Rasa i.e. Rasa, Rasabhasa or Hasya Rasa is Anauchitya. Anauchitya is the secret of comic writing we can well say. Ibid P. 278

(ख:) इदमुत्तम... निःशेषच्युत........ अत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यते।

काव्यप्रकाश: 1, 4 तथा वृत्ति:। अत्र अनौचित्यप्रवर्तिता रतिरेव काव्यहेतु:।

53. (क:) काव्यस्यात्मा ध्वनिरिति बुधै र्य: समाम्नातपूर्व:।
ध्वन्यालोक: 1,1

(ख:) काव्यस्यात्मा स एवार्थस्तथा चादिकवे: पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थ: शोक: श्लोकत्वमागत:।।
काव्यस्य स एवार्थ: सारभूत:।
ध्वन्यालोक: 1, 5 तथा वृत्ति:
स एवेति प्रतीयमानमात्रेऽपि तृतीय एव रसध्वनिरिति मन्तव्यम्।
ध्वन्यालोक: 1, 5 लोचनटीका

(ग:) रसस्य चर्वणात्मन: प्राधान्यं दर्शयन् रसध्वनेरेव सर्वत्र मुख्यतमत्वमिति दर्शयति।
ध्वन्यालोक: 1, 1 लोचनटीका

(घ:) रसध्वनिर्न यत्रास्ति तत्र वन्ध्यं विभूषणम्।
मृताया मृगशावाक्ष्या: किं फलं हारसम्पदा॥
प्रसिद्धेयमुक्ति: काव्यशास्त्रग्रन्थेषु।

(ङ:) वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।
अग्निपुराणम् 337, 13

(च:) काव्यस्यात्मनि साङ्गिनि रसादिरूपे न कस्यचिद् विमति:। साहित्यदर्पण: 1, 2 वृत्ति:।

54. (क:) तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुन:क्वापि।
क्वापीत्यनेनैतदाह यत् सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानि:।

काव्यप्रकाश: 1, 4 तथा वृत्ति:

55. (क:) तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणा: स्मृता:।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्या: कटकादिवत्॥
ध्वन्यालोक: 3, 6 वृत्ति:

(ख:) शब्दार्थयोरस्थिरा ये धर्मा:।
अलङ्कारा अस्थिरा इति नैषां गुणवदावश्यकी स्थिति:।
साहित्यदर्पण: 10, 1 तथा वृत्ति:

(ग:) उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादय:॥

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इवालङ्कारा:।.. एवं च समवायवृत्त्या शौर्यादय: संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेद:।

काव्यप्रकाश: 8, 67 एवं वृत्ति:

56. (क:) ब्रह्मानन्दशर्मकृत: काव्यसत्यालोक: पृ० 285

(ख:) एवं च... गुणालङ्काराणां भेद:। ओज:प्रभृतीनाम् अनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैवैषां भेद: इत्यभिधानम् असत्।
काव्यप्रकाश: 8, 67 वृत्ति:

57. (क:) तदेवं गुणालङ्कारयो र्भेदे व्यवस्थिते यत् कैश्चिदुक्तं लौकिकयो र्गुणालङ्कारयो: शौर्यादिहाराद्यो: समवेतत्वसंयोगित्वाभ्यां भेद: सम्भवति अलौकिकयो र्माधुर्याद्यनुप्रासोपमाद्योरुभयोरपि समवेतत्वादनुपपन्नो भेदस्तस्मात्तयो र्भेदाभिधानं गड्डलिकाप्रवाहन्यायेन। तथा हि गड्डलिका मेषी काचिदेका केनचिद्धेतुना पुरो गच्छति इतरास्तु विनैव निमित्तविचारं तामनुगच्छन्ति तथा केनाप्यालङ्कारिकेण गुणालङ्कारौ केनचिदभिप्रायेण भिन्नतयोक्तौ। इतरे तु हेतुविचारं विनैव तदनुसारेण तद्भेदं वदन्तीति।

काव्यप्रकाश: 8, 67 काव्यप्रदीपटीका।

(ख:) Such figures can hardly be considered extrinsic (Bahiranga) in Kavya and comparable to the armlets (Kataka and Keyura) the removable ornaments. Alamkaras should properly be compared to the Alamkaras of damsels which Bharata speaks of under Samanyabhinaya, Bhava, Hava etc, i.e. graces of a lady and not to the external jewels like the Kataka and Keyura.

Studies on Some Concepts ofAlamkarashastra (Dr. V. Raghavan) Chapter II use and abuse of Alamkara pp. 57 and 58.

(ग:) सामान्याभिनयो ज्ञेयो वागङ्गसत्त्वज:।
अलङ्काराश्च सत्त्वस्था ज्ञेया भावसमाश्रया:॥
यौवनेऽभ्यधिका: स्त्रीणां विकारा वक्त्रगात्रजा:।
भावो हावश्च हेला च परस्परसमुत्थिता:॥
सत्त्वभेदा भवन्त्येते शरीरे प्रकृतिस्थिता:।
भरतनाट्यशास्त्रम् 11, 4; 5; 6

58. (क:) मुखमिन्दु र्यथा पाणि: पल्लवेन सम: प्रिये।
वाच: सुधा इवौष्ठस्ते बिम्बतुल्यो मनोऽश्मवत्॥
इत्यत्र साम्यादुपमालङ्कार:।
साहित्यदर्पण: 10, 18 तथा वृत्ति:

(ख:) इदं वक्त्रं साक्षाद् विरहितकलङ्क: शशधर:

सुधाधाराधारश्चिरपरिणतं बिम्बमधरः।
इमे नेत्रे रात्रिंदिवमधिकशोभे कुवलये
तनु र्लावण्यानां जलधिरवगाहे सुखतरः॥
अत्रोपमेये उपमानस्यारोपाद् रूपकम्।
साहित्यदर्पणः 10, 34 वृत्तिः

59. अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिश्चित्रा तथापि न समागमः।।
ध्वन्यालोकः1,13 वृत्तिः

60. विद्युत्समुन्मेष इवान्धकारे
करोति या चेतसि चाकचक्यम्।
वक्रोक्तिवैचित्र्यविरोधिताद्यै
श्चितिश्चमत्कारपदोदितासौ।।

कल्पनाप्रधानमुक्तिवैचित्र्यात्मकं विरोधगर्भं विविधालङ्कारैरुपस्कृतं चित्रं काव्यं स्ववैलक्षण्येन चित्तं यथा चमत्करोति न तथा रसकाव्यम्।

वागीश्वरविद्यालङ्कारकृता वैदिकसाहित्यसौदामिनी 2, 3 तथा वृत्तिः

61. (कः) अलङ्कारः शिरोरत्नं सर्वस्वं काव्यसम्पदाम्।
उपमा कविवंशस्य मातैवेति मति र्मम॥
राजशेखरकृतकाव्यमीमांसातो गृहीता एषा।
परं नेयं कारिका काव्यमीमांसायाम्।
अलङ्कारशेखरः 11 मरीचिः

(खः) आत्मवानर्थसङ्घातप्रकाशः काव्यमिष्यते।
आत्मा चालङ्कृतिः सा च पर्याप्तिस्तत्र हेतवः॥
रेवाप्रसादकृता काव्यालङ्कारकारिका 4

(गः) अत उक्तम्-तेनास्य पूर्णतेति।
पूर्णता चालङ्कारः तेन वस्तुतोऽलङ्कार एव काव्यम्।
राधावल्लभत्रिपाठिकृतमभिनवकाव्यालङ्कारसूत्रम्
1,1,10 वृत्तिः

62. (क:) अलङ्कार: काव्यजीवनम्।

रसाश्चापि गुणाश्चापि----

अलङ्कारस्य परिधौ सर्वे चान्तर्भवन्ति ते।।

अभिनवकाव्यालङ्कारसूत्रम् 2,1, 1 वृत्ति:

(ख:) एतेन चमत्काराधायकानां समेषामपि काव्यधर्माणामलङ्कार इति महासंज्ञया सङ्ग्रह:। इयमेव हि नूतनानां काव्यविवेचकानां धोरणीति। तत्र न कस्यापि सहृदयस्य मतवैषम्यम्। यदि काव्यजीवातुभूतं ध्वन्यपरसंज्ञं प्रतीयमानार्थमप्यलङ्कारमेवाङ्गीकुरुते काव्यालङ्कारकारिकारस्तर्हि किमपक्रियते काव्यस्य काव्यलक्षणस्य वा। काव्यादर्शकारो दण्ड्यपि तदेव निगदति-

यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।

व्यावर्णितमिदं चेष्टमलङ्कारतयैव न:।। काव्यादर्श: 2, 367

अभिराजयशोभूषणम् परिचयोन्मेष: काव्यलक्षणम् 37 कारिकावृत्ति:

63. (क:) रेवाप्रसादकृता काव्यालङ्कारकारिका 33

(ख:) ...तेन अलम्भाव: काव्य एवोन्मिषति। अभिराजयशोभूषणम् 1, 37 वृत्ति:

64. (क:) अलङ्कारत्वञ्च रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्।

अलङ्कारचन्द्रिका (कुवलयानन्दचन्द्रिका) पृ० 2

(ख:) यद्वा इतराङ्गीभूतरसभावभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या समवायसम्बन्धावच्छिन्नचमत्कृतिजनकतानिरूपिता विषयितासम्बन्धावच्छिन्नावच्छेदकता तदवच्छेदकत्वं काव्यालङ्कारस्य लक्षणम्।

अलङ्कारमञ्जूषा पृ० 241

65. कारणमाहेति-अस्य काव्यस्य उद्भवे निर्माणे समुल्लासे चेति। इदमत्राकूतम्-शक्त्यादित्रयं काव्यकारणमिव चमत्कारोऽपि काव्यहेतु:।

काव्यप्रकाश: 1, 3 मधुमती टीका

66. (क:) अपारे काव्यसंसारे कविरेक: प्रजापति:।
यथास्मै रोचते विश्वं तथेदं परिवर्तते।।
शृङ्गारी चेत्कवि: काव्ये जातं रसमयं जगत्।
स चेत् कवि र्वीतरागो नीरसं व्यक्तमेव तत्।।
अग्निपुराणम् 339, 10-11

(2) नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवे र्जयति॥
काव्यप्रकाश: 1, 1

67. (क:) वाक्यं रसात्मकं काव्यम्। साहित्यदर्पण: 1, 3
उक्तं हि काव्यस्य शब्दार्थौ शरीरं रसादिश्चात्मा...अस्त्विति चेत्, न रसवत एव काव्यत्वाङ्गीकारात्।

साहित्यदर्पण: 1, 2 वृत्ति:

(ख:) रसभावचमत्कारान्यतमप्राणपेशल:।
काव्यं शब्दार्थसन्दर्भोऽलौकिकानन्दसुन्दर:॥

किञ्च स शब्दार्थसन्दर्भ: काव्यमुच्यते यो रसभावचमत्कारान्यतमप्राणपेशल: स्यात्। चमत्कार: शब्दार्थादीनां कुशलप्रयोगजन्या चित्तचमत्कृति:। चमत्कारकथनाद् रसादिरहिताया अपि सहृदयाह्लादकारिण्या रचनाया: काव्यत्वं प्रतिपादितम्।

कल्पनाप्रधानम् उक्तिवैचित्र्यात्मकं विरोधगर्भं विविधालङ्कारैरुपस्कृतं चित्रं काव्यं स्ववैलक्षण्येन चित्तं यथा चमत्करोति न तथा रसकाव्यम्। वैदिक-साहित्यसौदामिनी 2, 7 तथा वृत्ति: ; 2, 3 वृत्ति:

(ग:) यत्तु रसवदेव काव्यमिति साहित्यदर्पणे निर्णीतं तन्न, वस्त्वलङ्कार-प्रधानानां काव्यानामकाव्यत्वापत्ते:। न चेष्टापत्ति: महाकविसम्प्रदायस्याकुलीभाव-प्रसङ्गात्।

रसगङ्गाधर: प्रथमाननम् काव्यलक्षणम्

68. साहित्यसुधासिन्धुः 1, 4 वृत्तिः

69. लक्षणे गुणालङ्कारादिनिवेशोऽपि न युक्तः। उदितं मण्डलं विधोः इति काव्ये दूत्यभिसारिकाविरहिण्यादिसमुदीरितेऽभिसरणविधिनिषेधजीवनाभावादिपरे गतोऽस्तमर्कः इत्यादौ चाव्याप्त्यापत्तेः। न चेदमकाव्यमिति शक्यं वदितुं काव्यतया पराभिमतस्यापि तथा वक्तुं शक्यत्वात्। काव्यजीवितं चमत्कारित्वं चाविशिष्टमेव।

रसगङ्गाधरः प्रथमाननम् काव्यलक्षणम्

**टिप्पणी**—अस्तङ्गतोऽधुना सूर्यो मण्डलमुदितं विधोः।
अहो पूर्णं सरो ह्येतल्लुठन्तः स्नान्ति मानवाः॥

अत्र प्राप्तप्रायः प्रेयान्, प्रियेण सार्धमभिसरणसमयोऽयम्, अहो अस्य राज्ञः कृपणत्वञ्चेत्यादीनामर्थानां व्यञ्जनया प्रतीतिर्जायते। अतः सत्यपि गुणानामलङ्काराणामभावे एषु त्रिषु उदाहरणेषु काव्यत्वमुक्तिवैचित्र्यबलादेव विद्यते।

70. (कः) किमिदमुक्तिवैचित्र्यम् ? उक्ति र्हि वाच्यविशेषप्रतिपादि वचनम्।
किञ्च-----उक्तिवैचित्र्यं यत् काव्यनवत्वे निबन्धनमुच्यते।
ध्वन्यालोकः 4, 7 वृत्तिः

(खः) वैदग्ध्यं विदग्धभावः कविकर्मकौशलम्।
वक्रोक्तिजीवितम् 1, 10 वृत्तिः

71. अर्थनिवेशा स्त एव शब्दास्त एव परिणमन्तोऽपि।
उक्तिविशेषः काव्यं भाषा या भवतु सा भवतु।।
राजशेखरकृता कर्पूरमञ्जरी 1, 7

72. (कः) लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये।
काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते॥
उभावेवालङ्कार्यौ तयोः पुनरलङ्कृतिः।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते॥

वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा। कीदृशी.. वैदग्ध्यं विदग्धभावः कविकर्मकौशलं तस्य भङ्गी विच्छित्तिः या भणितिः विचित्रैवाभिधा वक्रोक्तिरित्युच्यते। वक्रोक्तिजीवितम् 1, 2; 1, 10 तथा वृत्तिः

(खः) अत्रोभयत्र वक्रोक्तिःकाव्यजीवितं तस्या एव पुरः स्फूर्तिकत्वात्।
सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारो ऽनया विना।।

वक्रोक्तिश्चमत्कारिण्युक्तिः।
साहित्यसुधासिन्धुः 1, 2 तथा वृत्तिः

73. (कः) एवं चतुर्विधै र्वृत्तै र्नानाछन्दःसमुद्भवैः।
काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः।।
भरतनाट्यशास्त्रम् 15, 172

(खः) एतानि वा काव्यविभूषणानि
षट्त्रिंशदुद्देशनिदर्शकानि।
काव्येषु सोदाहरणानि तज्ज्ञैः
सम्यक् प्रयोज्यानि यथारसानि॥
भरतनाट्यशास्त्रम् 16, 42

74. धर्मा रसा लक्षणानि रीत्यलङ्कृतिवृत्तयः।
रसिकाह्लादका एते काव्ये सन्ति च षड्गुणाः॥
अच्युतरायकृतः साहित्यसारः 1, 10 (पृ० 8)

75. (कः) भरतनाट्यशास्त्रम् अभिनवभारती टीका द्वितीयः खण्डः

(खः) अतिशय एकः सततं काव्ये प्राणप्रदो धर्मः।
उच्छ्वासः कवितायाः स्तम्भः साहित्यसौधस्य।
अभिनवकाव्यालङ्कारसूत्रम् 2, 6, 5 वृत्तिः

76. उपाध्यायमतं तु लक्षणबलादलङ्काराणां वैचित्र्यमागच्छति।
तथा हि-गुणानुवादनाम्ना लक्षणेन योगात् प्रशंसोपमा।
अतिशयनाम्नाऽतिशयोक्तिः मनोरथाख्येनाप्रस्तुतप्रशंसा।
मिथ्याध्यवसायेनापह्नुतिः सिद्ध्या तुल्ययोगितेति।
एवमन्यदुत्प्रेक्ष्यम्। लक्षणानां च परस्परवैचित्र्यादनन्तो विचित्रभावः।

यथा प्रतिषेधमनोरथयोः सम्मेलनादाक्षेपः इति।

अभिनवभारती द्वितीयः खण्डः पृ० 321

77. (कः) गुणकीर्तनं नाम लक्षणमुपमाश्लेषानुग्राहित्वेन स्थितम्।

लक्षणानि हि अलङ्कारानपि चित्रयन्ति तदग्रे एव वक्ष्यामः।

अथ गुणानुवादः-

पालिता द्यौरिवेन्द्रेण त्वया राजन् वसुन्धरा।

ननु उपमेयमलङ्कारः किं ततः ? उक्तं ह्यलङ्काराणां वैचित्र्यं

लक्षणकृतमेव। यथा-मुकुटाद्यलङ्कारः, शौर्यादिगुणव्यूढोरस्कत्वादिलक्षणसमुदायः, राजाऽलङ्कारकार्यमुच्चगुणावांश्च लक्षणयुक्तश्च तथा काव्यमपि।

तेन गुणालङ्कारातिरिक्तानि सर्वलक्षणानीति मन्तव्यम्।

Whatever beauty in a kavya is not due to either guna or Alamkara is due to lakshana, yes says Abhinavagupta.

नन्वेवं सर्वत्र लक्षणयोगः क आक्षेपार्थः प्रियमेव ह्यस्माकमदः।

अभिनवभारती द्वितीयः खण्डः पृ० 388, पृ० 390-91

Abhinava opines that Laksana is sometimes natural grace and some times it adds beauty to Alaṁkara also. Thus he considers it more important than Alamkara.

V. Raghavan Studies in Some Concepts of Alamkara Shastra. The History of Lakshanas pp. 21-22

78. (कः) अलङ्कारै र्गुणैश्चैव बहुभिः समलङ्कृतम्।

भूषणैरिव चित्रार्थै स्तद् भूषणमिति स्मृतम्॥

भरतनाट्यशास्त्रम् 16, 6

(खः) लक्षणानि गुणैः सालङ्कारै र्योगस्तु भूषणम्।

यथा-

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम्।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम्॥

आक्षिपन्ति निन्दन्ति। कोषो बीजकोषो भाण्डागारश्च दण्डो नालश्चतुर्थोपायश्च। अत्रारविन्दानामचेतनतया निन्दा न सम्भवतीत्युपमा। एवं च निदर्शनार्थान्तरन्यासश्लेषालङ्कारसहिताभ्यां माधुर्यप्रसादाभ्यां योगः।

साहित्यदर्पणः 6, 175 तथा विवृतिटीका

79. अभिराजयशोभूषणम् 3, 66

80. (कः) काव्यं ध्वनिगुणीभूतव्यङ्ग्यं चेति द्विधा मतम्।
वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्॥
साहित्यदर्पणः 4, 1

(खः) इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनि र्बुधैः कथितः।
अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।
शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्वरं स्मृतम्॥

काव्यप्रकाशः 1, 4-5

81. (कः) अतिशयिनि चमत्कारिणि इदं काव्यं...चमत्कारकारिणि व्यङ्ग्ये उत्तमम्। काव्यप्रकाशः 1, 2 रविभट्टाचार्यकृता मधुमती टीका

(कः) यत्र व्यङ्ग्यचमत्कारो वाच्याधिकतरो भवेत्।
ध्वनिकाव्यमिदं प्राहुः पारिभाषिकमुत्तमम्॥
वाच्याधिकचमत्कारि नो व्यङ्ग्यं यत्र भासते।
तदेव मध्यमं काव्यं कविवृन्दै र्निगद्यते॥
अलङ्कारकृतानन्दसन्दोहो यत्र जायते।
चित्रं शब्दार्थभेदेन द्विधा तत् परिकीर्तितम्॥
तत्र शब्दालङ्कारचमत्कारि यथा-न्यक्कारा इत्यादि।
अर्थालङ्कारचमत्कारि यथा-दुर्वारारातिं इत्यादि।

साहित्यसुधासिन्धुः 1, 5-7 तथा वृत्तिः

(खः) Thus Lakshanas are important because they are elaborately enumerated at first, they are the very kavyasharira or the Kavivyapara or Abhidha of poet, they are the elements of natural beauty even in the absence of Alamkaras, they are the factors that multiply the three Alamkaras into many and they beautify sometimes even Alamkaras.

From what we see in chapter 17 in Bharata's time, the concept of Lakshana underwent much development, while that of Alamkaras was in its infancy.

V. Raghavan: Studies on Some Concepts of Alamkarashstra page 24, page 45.

(गः) From his treatment it appears that he considers Lakshanas to be of greater importance than Alamkaras which are mentioned as just a few in number.

S. K. De History of Sanskrit Poetic Vol. II B. 3-4.

82. यथा प्रासादकुड्यादिके कर्तव्ये प्रथमं भूमिः तद्वत् काव्ये निर्मातव्ये भूमिकल्पः शब्दछन्दोविधिः, क्षेत्रपरिग्रहं वृत्तसमाश्रयमित्यादि विरचयद् यद् भित्तिस्थानीयं लक्षणयोजनं चित्रकर्मप्रतिममलङ्कारगुणनिवेशनं गवाक्षवातायनादिदेशीयो दशरूपकविभागः उपयोगनिरुपणा प्रख्या काक्वादिप्लुतिः।

भरतनाट्यशास्त्रम् अभिनवगुप्तकृता अभिनवभारती टीका पृ० 1247

83. (कः) विशिष्टशब्दरूपस्य काव्यस्यात्मा चमत्कृतिः।
उत्पत्तिभूमिः प्रतिभा मनागत्रोपपादितम्॥

हरिदासकृतः काव्यालोकः 7, 200

(खः) वागर्थौ सचमत्कारौ काव्यं काव्यविदो विदुः।
विश्वेश्वरकविचन्द्रकृता चमत्कारचन्द्रिका प्रथमो विलासःपृ० 2

(ग:) काव्यालोक: 1, 7

(घ:) कविकण्ठाभरणम् 3, 1 वृत्ति:

84. विशेषप्रतिपत्त्यर्थं प्रोक्तुं तेषां च गौरवम्।(कारिका 63) इति कारिकात:प्रारभ्य काश्चिद् युक्ती:.... कथितं मया।। (कारिका 132) पर्यन्तं काव्यादिविषये पक्षविपक्षसाधकबाधकविचारा अत्र प्रदर्शिता:।

85. साहित्यदर्पण: 4, 1

86. साहित्यदर्पण: 6, 1

87. साहित्यदर्पण: 6, 1 विवृतिपूर्ति: टीका

88. साहित्यदर्पण: 6, 336

89. (क:) स ध्वनि र्यत्र वाच्यार्थो व्यङ्ग्यार्थे पर्यवस्यति।
समापनात्तु वाच्यार्थो गौणभावाय कल्पते।
प्राधान्ये गुणभावे वा प्राधान्यं हि चमत्कृते:।
अचमत्कारि वाक्यं तु व्यर्थं भित्तिचित्रवत्॥
लोकमणिदाहालकृतध्वन्यालोकलीला टीका
प्रास्ताविकं किञ्चित् 14-15

(ख:) सङ्कलनेनास्य ध्वनेस्त्रयो भेदा व्यङ्ग्यस्य त्रिरूपत्वात्।
काव्यप्रकाश: 5, 47 वृत्ति:

(ग:) इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनि र्बुधै: कथित:।
अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्॥
तदपेक्षया वाच्यस्यैव चमत्कारित्वात्।
शब्दचित्रमर्थचित्रमव्यङ्ग्यं त्ववरं स्मृतम्॥
काव्यप्रकाश: 1, 4-5

90. (क:) साहित्यसुधासिन्धु: 1, 5-6

(ख:) I. दूति श्वास० इत्यादि

II. रोलम्बो मधुपः० इत्यादि

III. तत्र शब्दालङ्कारचमत्कारि यथा–

न्यक्काराः कैरवाणामखिलकमलिनीकाननानन्दपूराः
................. ते कराः सन्तु सौराः॥
अर्थालङ्कारचमत्कारि यथा–
दुर्वारारातिराजीवनदवदहनः कौङ्कुमो दिग्वधूनां
................. जागरीति प्रतापः॥
अत्र चोत्प्रेक्षा चमत्कारिणी। अत्रोभयत्र सूर्यराजविषयक-
भावसत्त्वेऽप्यनुप्रासोत्प्रेक्षे चमत्कारहेतू।
साहित्यसुधासिन्धुः 1, 3-6

91. विश्वेश्वरकविचन्द्रकृता चमत्कारचन्द्रिका पृ० 73-74, 77-78

92. तच्चोत्तमोत्तमोत्तममध्यमाधमभेदाच्चतुर्धा।
शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्।
यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारकारणं तद् द्वितीयम्।
यत्र व्यङ्ग्यचमत्कारासमानाधिकरणो वाच्यचमत्कारस्तत् तृतीयम्।
यत्रार्थचमत्कृत्युपस्कृता शब्दचमत्कृतिः प्रधानं तदधमं चतुर्थम्।
रसगङ्गाधरः प्रथमाननम् काव्यलक्षणप्रकरणम्

93. अभिराजयशोभूषणम् 1, 38

94. तत्र दशविधश्चमत्कारः–अविचारितरमणीयः, विचार्यमाणरमणीयः, समस्तसूक्तव्यापी, सूक्तैकदेशदृश्यः, शब्दगतः, अर्थगतः, शब्दार्थगतः, अलङ्कारगतः, रसगतः, प्रख्यातवृत्तिगतश्च।
कविकण्ठाभरणम् 3, 2 वृत्तिः

95.(कः) यत्तु ध्वनिकारेणोक्तम्... उत रसादिरुपमात्रो वा।

.....रसवत एव काव्यत्वाङ्गीकारात्। वाक्यं रसात्मकं काव्यम्
साहित्यदर्पणः 1, 2 तथा वृत्तिः

(खः) अदोषत्वे सति सगुणत्वे च सति स्फुटालङ्काररसान्यतरवत्त्वं काव्यत्वमितिफलितार्थः।

काव्यप्रकाशः 1, 4 काव्यप्रकाशखण्डनटीका

(गः) अत्र चोत्प्रेक्षा चमत्कारकारिणी। अत्रोभयत्र सूर्यराजविषयकभावसत्त्वेऽप्यनुप्रासोत्प्रेक्षे चमत्कारहेतू। वस्तुतस्तु अनुचितोऽयं ध्वनित्वादिना विभागः। तथाहि एतेषु त्रिषु रसादिकं न प्रतीयते प्रतीयते वा। नाद्यः तदा काव्यत्वविरहापत्तेः। अथ प्रतीयते तथा कथं ध्वनित्वादिना विभागः।

विश्वनाथदेवकृतसाहित्यसुधासिन्धुः 1, 7 वृत्तिः

(घः) न हि चमत्कारविरहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम्। कविकण्ठाभरणम् 3, 1 वृत्तिः।

96. (i) Poetry is the art of expressing in melodious words, thoughts which are the creations of imagination and feelings, Chambers Dictionary.

**टिप्पणी**–मधुरललितपदैः कल्पनानुभूतिप्रसूतविचारव्यक्तिकारिणी कलैव काव्यम्। शब्दः, अर्थः, भावः, कल्पना, अनुभूति बुद्धिश्च काव्यघटकतत्त्वानि इति पाश्चात्यकाव्यशास्त्रे प्रतिपादितम्।

(ii) सहृदयहृदयाह्लादि शब्दार्थमयत्वमेव काव्यलक्षणम्। ध्वन्यालोकः 1, 1 वृत्तिः

(iii) समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना....गोचरी-क्रियमाणः....रत्यादिरेव रसः।

रसगङ्गाधरः प्रथमाननम्, काव्यलक्षणम्

(iv) काव्यस्य ललितोचितसन्निवेशचारुणः शरीरस्यैवात्मा साररूपतया स्थितः सहृदयश्लाध्यो योऽर्थः।
ध्वन्यालोकः 1, 2 वृत्तिः

(v) रमणीय अनुभूति, उक्तिवैचित्र्य और छन्द इन तीनों का समञ्जित

रूप ही कविता है। वाणी के माध्यम से सौन्दर्य की अभिव्यक्ति का नाम काव्य है अथवा सरस शब्दार्थ का नाम काव्य है।

डॉ० नगेन्द्रकृत आस्था के चरण पृ० 122 तथा पृ० 599

**टिप्पणी**—यहाँ रमणीय अनुभूति से अभिप्राय रसात्मक और आनन्दात्मक अनुभूति है और उक्तिवैचित्र्य का तात्पर्य चमत्कारपूर्ण शब्द और अर्थ से युक्त कविप्रयुक्त वाक्य है।

97. कविकण्ठाभरणम् 3, 1

98. कविकण्ठाभरणम् 3, 18.



भरत से लेकर आधुनिक काल तक संस्कृतकाव्यशास्त्र की सुदीर्घ परम्परा में चमत्कारसम्बन्धी विचारों का चिन्तन तथा अनुचिन्तन अनवरत रूप से होता आ रहा है। प्रस्तुत ग्रन्थ में इन विचारों को एकत्र करके इन्हें सुनियोजित रूप में प्रस्तुत किया गया है। आचार्य क्षेमेन्द्र और आचार्य मम्मट से पहले संस्कृत काव्यशास्त्र में रस, अलङ्कार, रीति, ध्वनि और वक्रोक्ति इन पांच काव्यसम्प्रदायों की स्थापना हो चुकी थी। आचार्य क्षेमेन्द्र ने औचित्यविचारचर्चा में औचित्य तथा कविकण्ठाभरण में चमत्कारसम्प्रदाय प्रतिष्ठापित किया। संस्कृतकाव्यशास्त्र के समीक्षक औचित्यसहित छः सम्प्रदायों को मान्यता देते रहे हैं किन्तु सातवें चमत्कारसम्प्रदाय को तो समुचित महत्त्व नहीं दे पाये। इस ग्रन्थ में चमत्कारसम्प्रदाय को अन्य सम्प्रदायों से अधिक सक्षम सिद्धान्त के रूप में प्रस्तुत किया गया है। इसे आधुनिक काव्यसमीक्षापद्धति में समुचित स्थान देने की आवश्यकता है।

मान्य कुलपति प्रो. राधावल्लभ त्रिपाठी के शब्दों में –

"ग्रन्थेऽस्मिन् चमत्कारसिद्धान्तप्रतिपादनं यथा समग्रतां प्राप्तं तथा पूर्वं न विलोक्यते। प्रतिपादनेऽप्यत्र नवीनता मौलिकता च स्फुरतः।"

प्रशंसन्ति चमत्कारं चमत्कृतधियो बुधाः।
प्राचीनास्ते नवीनास्ते ह्यतिनवीनकोविदाः।।
सर्वेषां सम्प्रदायानां येनास्ति सम्प्रदायता ।
चमत्कारः कथं सोऽयं सम्प्रदायो न गण्यते ।।



## प्रो. रामप्रताप

(राष्ट्रपतिपुरस्कार से सम्मानित)

वेदालङ्कार, एम० ए०, साहित्याचार्य, पीएच०डी०

**जन्म** : 26जुलाई, 1936

**जन्मस्थान** : दादरी, जिला गौतमबुद्धनगर, उत्तरप्रदेश

**वर्तमान पता** : 15/2, त्रिकुटानगर, जम्मूतवी - 180012

**अध्यापन** : व्याख्याता विश्वेश्वरानन्दवैदिकशोधसंस्थान, होशियारपुर (1962-1964), जम्मूविश्वविद्यालय (1964-1977), प्रवाचक जम्मू विश्वविद्यालय (1977-1985), आचार्य (प्रोफेसर) जम्मू विश्वविद्यालय (1985-1996), कलासङ्कायाध्यक्ष जम्मू विश्वविद्यालय (1993-1996)

**प्रकाशित पुस्तकें** : पुराणानां काव्यरूपताया विवेचनम्, पुराणविमर्शः, साहित्यसुधासिन्धुः (हिन्दी अंग्रेज़ी भूमिका, मूलपाठ तथा हिन्दी अनुवाद) उत्तरप्रदेश संस्कृत अकादमी से पुरस्कृत, चमत्कारविचारचर्चा (चमत्कारसम्प्रदाय प्रतिपादिनी कारिकावली)

मम्मटोत्तरयुग में भारतीय काव्यशास्त्र में नूतन अवधारणाएं, त्रिविधाकाव्यसमीक्षा, भल्लटशतक (वेदकुमारी रामप्रताप) संस्कृत हिन्दी टीका तथा अंग्रेज़ी अनुवाद, उत्तर प्रदेश संस्कृत अकादमी से पुरस्कृत, सांस्कृतिक और साहित्यिक निबन्ध (वेदकुमारी रामप्रताप), राजेन्द्रकर्णपूर (वेदकुमारी रामप्रताप) हिन्दी भाषानुवाद सहित, ऊर्मिका (वेदकुमारी रामप्रताप) संस्कृत कविता संग्रह, मेरे गीत तुम्हारे गीत (वेदकुमारी रामप्रताप) हिन्दी कविता संग्रह।